म० म० शिवकुमारशास्त्रि-ग्रन्थमाला

[ षष्ठं पुष्पम् ]

व्योमशिवाचार्यप्रणीता

# व्योमवती

(प्रशस्तपाद-भाष्यस्य टीकारूपा पदार्थसङ्ग्रहटीका)

[ द्वितीयो भागः ]




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

म० म० शिवकुमारशास्त्रि-ग्रन्थमाला

[ षष्ठं पुष्पम् ]

व्योमशिवाचार्यप्रणीता

# व्योमवती

[ द्वितीयो भागः ]



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

M. M. ŚIVAKUMĀRAŚĀSTRI-GRANTHAMĀLĀ

[Vol. 6]

# VYOMAVATĪ

OF

## VYOMAŚIVĀCĀRYA

[ PART TWO ]

EDITED BY
**GAURINATH SASTRI**
Vice-Chancellor
Sampurnanand Sanskrit University
Varanasi.




V A R A N A S I
1984

म० म० शिवकुमारशास्त्रि-ग्रन्थमाला

[ ६ ]

व्योमशिवाचार्यप्रणीता

# व्योमवती

[ द्वितीयो भागः ]

सम्पादकः

श्रीगौरीनाथशास्त्री

कुलपतिः,

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य




वाराणस्याम्

२०४० तमे वैक्रमाब्दे १९०५ तमे शकाब्दे १९८४ तमे खैस्ताब्दे

प्रकाशकः—
**निदेशकः**, अनुसन्धानसंस्थानस्य,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।



प्राप्तिस्थानम् :—
**विक्रयविभागः**,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी - २२१००२.



प्रथमं संस्करणम्, ११०० प्रतिरूपाणि
मूल्यम्—५०.०० रूप्यकाणि



मुद्रक :—
**रत्ना प्रिंटिंग वर्क्स**,
बी २१/४२ ए, कमच्छा,
वाराणसी - २२१०१०

# प्राक्कथनम्

अयमिदानीं मुद्रयित्वोपस्थाप्यते विदुषां पुरतः प्रशस्तपादभाष्यटीकारूपायाः व्योमवत्या द्वितीयोऽन्तिमश्च भागः। अस्मिन्नपि भागे व्योमशिवाचार्येण प्रथमभागवदेव बहूनामप्रसिद्धानां सूत्राणामुल्लेखो विहितः। गुणादिपदार्थानां परीक्षावसरे च धर्मकीर्त्तेः कुमारिलस्य च सिद्धान्तानां विस्तरेण खण्डनमपि कृतमाचार्येण। सत्यपि विषयगाम्भीर्ये सरलसरलया भाषया वस्तुप्रतिपादनमाचार्यस्यास्यान्येभ्यष्टीकाकारेभ्यो वैशिष्ट्यमिति कथनन्तु बहुलमेव।

मूलग्रन्थव्याख्यानावसरे च व्योमशिवाचार्येण स्वगुरूणां व्याख्यानस्योल्लेखः सश्रद्धं कृतो वर्त्तते। तत्कालप्रसिद्धयोश्च प्रशस्तपादभाष्यटीकयोर्व्याख्यान्तरमप्यनेन यत्र तत्र 'अन्ये तु' इत्यादिनोद्धृत्य प्रदर्शितम्। 'शब्दादीनामप्यनुमानेऽन्तर्भावः समानविधित्वात्' ( पृ० १६३ ) इति भाष्यकारवाक्यस्य व्याख्यानेऽनेन पक्षद्वयमुपस्थापितम्। तत्र 'शब्दादीनाम्' इति समस्तपदस्य 'तद्गुणसंविज्ञानबहुव्रीह्यभ्युपगमे' शब्दस्याप्यनुमानेऽन्तर्भावः। अतद्गुणसंविज्ञाने 'शब्दं विना अपरेषामिति' ( पृ० १६३ ) शब्दस्य स्वतन्त्रं प्रामाण्यन्तु विस्तरेण प्रतिपाद्य तेनोक्तं 'शेषञ्चात्र दूषणप्रतिसमाधानम् अस्मद्गुरुभिर्विस्तरेणाभिहितमिति नेहोक्तम्। अतः शब्दस्याप्तोक्तत्वेन प्रामाण्यान्नानुमानेऽन्तर्भावः' ( पृ० १७१ ) इति। एतादृशं व्याख्यानन्तु न्यायसारकर्त्तारं भासर्वज्ञं स्मारयति, येन प्रमाणचतुष्टयवादिनो गौतमस्यर्षेः न्यायसूत्रमपि व्याख्यया प्रत्यक्षानुमानशब्दरूपप्रमाणत्रयोपस्थापकत्वेन प्रदर्शितम्। न्यायसारे तु उपमानस्य पृथक् प्रामाण्यं निरस्तम्, अत्र तु व्योमशिवेन प्रमाणद्वयवादिनां वैशेषिकसम्प्रदायप्रवर्त्तकानां कणादप्रशस्तपादादीनां वचनन्तु प्रत्यक्षानुमानशब्दाख्यप्रमाणत्रयप्रकाशकमिति व्यवस्थापितम्। तदपि व्यवस्थापनं सम्प्रदायानुसारीत्यपि स्वकीयगुरुपादानां व्याख्यायाः समुल्लेखेन दृढीकृतम्।

अस्य ग्रन्थस्य सम्पादनेऽस्माभिः प्रशस्तपादभाष्यपाठस्तु व्योमशिवस्वीकृत एव परिगृहीतः। व्योमवत्यान्तु अशुद्धानां स्थलानां यथामति शुद्धिरपि [ ] एतादृशबन्धनीमध्यगता प्रदर्शिता। कदाचिद् न्यूनतायां अपि तादृशेनैव प्रकारेण यथामति पूर्त्तिरपि कृता वर्त्तते। व्योमशिवरचितमन्तिमं पद्यन्तु मातृकायां खण्डितमुपलब्धमतस्तेनैव रूपेणात्र मुद्रितमिति शम्।

विश्वेश्वरपुर्याम्,
महाशिवरात्रिपर्वणि
वि० सं० २०४०

**श्रीगौरीनाथशास्त्री**
कुलपतिः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# विषयानुक्रमणी

# अथ गुणप्रकरणम्

## गुणसामान्यसाधर्म्यम्

**रूपादीनां सर्वेषां गुणानां गुणत्वाभिसम्बन्धो द्रव्याश्रितत्वं निष्क्रियत्वमगुणवत्त्वञ्च ।**

इदानीमुद्देशक्रमेणावसरप्राप्तानां गुणानामितरपदार्थवैधर्म्येण व्यापकं साधर्म्यं पुनः प्रतिनियतानाञ्च स्वभेदान्तराद् व्यावृत्तिमपि दर्शयन्नाह *रूपादीनां सर्वेषां गुणानां गुणत्वाभिसम्बन्धः* इत्यादिप्रकरणम् । गुणत्वेनाभिसम्बन्धस्तदुपलक्षितः समवायः । स च केषाम् ? रूपादीनाम् । तथाप्यादिशब्दस्य अनियतार्थग्राहकत्वान्न ज्ञायते कियतामतः *सर्वेषाम्* । उत्क्षेपणाद्यवरोधपरिहारार्थञ्च *गुणानाम्* इति ।

नन्वेवं सर्वेषां गुणानामित्युक्ते व्यभिचाराभावाद् व्यर्थं रूपादीनामितिपदम् । न । [गुणत्वाभिसम्बन्धा]श्रितत्वविशेषणाभ्यां 'सर्वो गुणः' इति दर्शनस्य व्यवच्छेदार्थत्वात् । तथाहि रूपादीनामेव गुणत्वाभिसम्बन्धः साधर्म्यं नान्येषामिति ।

न च सांख्याभ्युपगतस्य गुणत्रयस्य व्यवच्छेदार्थं रूपादिग्रहणमिति न्याय्यम्, तस्य प्रमाणानुपलब्धेः । प्रसिद्धञ्च विशेषणेन व्यवच्छिद्यमानं दृष्टं यथा नीलेनानीलमिति । तदेवं रूपादयः, इतरस्माद् भिद्यन्ते, गुणा इति व्यवहर्त्तव्या वा, गुणत्वाभिसम्बन्धात्, ये तु न भिद्यन्ते; न च गुणा इति व्यवह्रियन्ते, न ते गुणत्वाभिसम्बद्धाः, यथा क्षित्यादय इति । शेषं पूर्ववत् ।

तथा द्रव्याश्रितत्वञ्च साधर्म्यं रूपादीनाम् । तच्च सावधारणं विवक्षितम् । अन्यथा हि द्रव्यादीनामपि द्रव्याश्रितत्वाद् अतिव्यापि साधर्म्यं स्यात्, न व्यावृत्तमिति । अवधारणन्तु द्रव्येष्वेवाश्रितत्वमेवेति । द्रव्यकर्मविशेषा द्रव्येष्वेवाश्रिता, न चाश्रिता एवेति । सामान्यसमवायौ तु द्रव्येष्वाश्रितौ, न तु द्रव्येष्वेव, गुणादावपि सद्भावात्, गुणास्तु द्रव्येष्वेवाश्रिताः

न गुणादौ; तथा आश्रिता एव द्रव्येषु, न अनाश्रिता; निर्गुणस्य द्रव्यस्यानुपलब्धेः । तदेवम् अयोगान्ययोगव्यवच्छेदेन द्रव्याश्रितत्वाद् इतरेभ्यो भिद्यन्त इति साध्यम् ।

तथा निर्गता चलनलक्षणक्रिया येभ्यस्ते निष्क्रियाः, तेषां भावो निष्क्रियत्वम् ।

गुणा विद्यन्ते येषां ते गुणवन्तः, तेषां भावो गुणवत्त्वं तत्प्रतिषेधेन चागुणवत्त्वमिति ।

ननु निष्क्रियत्वमगुणवत्त्वञ्च गुणादीनां पञ्चानामपीत्युक्तमतो नेदं पदार्थान्तराद् व्यावृत्तं साधर्म्यम् । न च साधर्म्यमात्रेणेह प्रयोजनमस्ति पूर्वमेवाभिधानात् । अथ गुणत्वसहचरितं व्यावृत्तं साधर्म्यमात्रमेतदिति ।

यद् वा द्रव्यपदार्थादेव भेदप्रतिपादनार्थमेतत् । तथाहि, परे मन्यन्ते न गुणाः कर्म वा द्रव्यादर्थान्तरमिति, निष्क्रियत्वागुणत्वाभ्यां तदुपपत्तेः । तथाहि, क्रियावद् गुणवच्च द्रव्यम्, तद्रहिताश्च गुणा इति धर्मभेदाद् भिद्यन्त एव ।

अथ निष्क्रियत्वमगुणवत्त्वञ्च कथं रूपादीनाम्, द्रव्यस्यैव समवायिकारणत्वेन तदाधाराणाम् उत्पत्त्यभावात् । अथ रूपादिसमवेतानां रूपादीनामुत्पत्तेर्युक्तं समवायिकारणत्वम् । तन्न । अनुपलब्धेः । यथा हि रूपवद् द्रव्यमिति ज्ञानं नैवं रूपवद् रूपमिति प्रतिभासोऽस्ति ।

अभ्युपगम्याप्युच्यते, यदि च रूपं रूपोत्पत्तौ समवायिकारणम् अन्येनासमवायिकारणेन भवितव्यम् । न च कारणरूपमेवासमवायिकारणम्, तस्यापि स्वगतरूपोत्पत्तौ समवायिकारणत्वात् । न च तदेव समवायिकारणमसमवायिकारणञ्चेति दृष्टम् । नापि संयोगः, तस्य द्रव्योत्पत्तावसमवायित्वात् । यदि च तन्तुसंयोगस्तद्रूपोत्पत्तावसमवायिकारणम्, तदुत्पत्तेः पूर्वं तदभावः स्यादेवेति । रूपरूपेष्वपि संयोगस्य कारणत्वे तदुत्पत्तेः पूर्वमभावो वाच्यः । न चैकस्मादेव रूपाद् रूपान्तरमिति वाच्यम् । एकस्य क्रमयौगपद्याभ्यामारम्भप्रतिषेधात् ।

अत एव निष्क्रियत्वं मूर्त्त्यनुविधानात् क्रियायाः। सा च गुणेषु न सम्भवति निर्गुणत्वात्। असर्वगतद्रव्यपरिमाणञ्च मूर्त्तिरिति।

अथाश्रयगमनेन गुणेषु गमनप्रतिभासस्तर्हि कथम्? मुख्ये बाधकोपपत्तेरुपचारेण। द्रव्ये हि वर्तमानं गमनमेकार्थसमवायितया गुणेष्वारोप्य प्रतिपद्यन्ते गुणा गच्छन्तीति।

तदेवं निष्क्रियत्वादगुणवत्त्वाच्च द्रव्याद् अर्थान्तरं रूपमिति। अथार्थान्तरत्वे कथं नियतेन धर्मिणा व्यपदेशः? सम्बन्धनियमात्। न च सम्बन्धस्य सम्बन्धान्तरपरिकल्पना सम्बन्धरूपत्वादेवेति वक्ष्यामः समवायपदार्थे।

**केषाञ्चिदेव मूर्त्तगुणत्वम्**

**रूपरसगन्धस्पर्शपरत्वापरत्वगुरुत्वद्रवत्वस्नेहवेगा मूर्तगुणाः।**

अथेदानीं प्रतिनियतानां स्वभेदान्तराद् व्यावृत्तं साधर्म्यं दर्शयति रूपादयो वेगान्ता मूर्तगुणा इति। मूर्तानामेव, नत्वेत एव मूर्तानाम्, अन्येषामपि तद्गुणत्वात्। तथाहि, पृथिव्यादिषु त्रिषु रूपद्रवत्वादयः, गुरुत्वरसौ तु द्वयोः, स्पर्शश्चतुर्णाम्, गन्धः क्षितावेव, [स्नेहो]ऽम्भस्येव, परत्वापरत्ववेगास्तु पञ्चस्वपि मूर्तेष्विति।

**केषाञ्चिच्चामूर्तगुणत्वम्**

**बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा अमूर्तगुणाः।**

बुद्ध्यादयः शब्दान्तास्त्वमूर्तगुणा इति। अमूर्तानामेव गुणाः, नत्वेत एव, संख्यादीनामपि तद्गुणत्वात्। बुद्ध्यादयो भावनान्ताः पुरुषे, शब्दश्चाकाश इति।

**केचिन्मूर्तामूर्तोभयगुणाः**

**संख्यापरिमाणपृथक्त्वसंयोगविभागा उभयगुणाः।**

संख्यादयो विभागान्ता उभयगुणाः। उभयेषां मूर्तामूर्तानामेव गुणाः। तथैत एवोभयगुणाः।

**गुणेष्वनेकाश्रिताः**

**संयोगविभागद्वित्वद्विपृथक्त्वादयोऽनेकाश्रिताः ।**

अथेदानीम् एकानेकाश्रितत्वं दर्शयन्नाह *संयोगविभागद्वित्वद्विपृथक्त्वादयोऽनेकाश्रिताः* इत्यादिपदेन त्रित्वादिका परार्धान्ता संख्या तद्विशिष्टञ्च पृथक्त्वं गृह्यते । अनेकाश्रितत्वञ्चात्र व्यक्त्यपेक्षया विवक्षितम्, न जात्यपेक्षया, रूपादेरपि तद्भावप्रसङ्गात् ।

यद्यपि रूपत्वादिजातीयमनेकस्मिन् न वर्तते तथापि एका तद्व्यक्तिरेकस्मिन्नेव । न चैवं संयोगादिः, तद्व्यक्तेरनेकाश्रितत्वोपलब्धेः ।

**तद्भिन्नानामेकाश्रितत्वम्**

**शेषास्त्वेकैकद्रव्यवृत्तयः ।**

*शेषास्त्वेकैकद्रव्यवृत्तयः* इति । उक्तेभ्योऽन्ये शेषाः । ते हि एकैकस्मिन्नेव द्रव्ये वर्तन्ते । एका हि व्यक्तिरेकस्मिन्नेव समवेता तथा रसादिव्यक्तयोऽपि । अवधारणन्त्वेषाम् एकैकद्रव्यवृत्तित्वमेव, नत्वेषामेव, उभयवृत्तीनामपि तद्भावात् ।

**विशेषगुणोद्देशः**

**रूपरसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा वैशेषिकगुणाः ।**

**सामान्यगुणोद्देशः**

**संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वनैमित्तिकद्रवत्ववेगाः सामान्यगुणाः ।**

इदानीं के विशेषगुणाः, के च सामान्यगुणा इत्युपदर्शनार्थमाह रूपादयः शब्दान्ता वैशेषिकगुणाः ।

कीदृशमेषां विशेषगुणत्वम् ? यद्येकाश्रितत्वं गुरुत्वादावपि स्यात् । अथैकैकेन्द्रियग्राह्यत्वम् ? स्नेहद्रवत्वधर्माधर्मादौ न स्यात् । अथासाधारणत्वम् ? तन्नास्ति, रूपत्वादिजातीयस्यानेकत्रोपलब्धेः । व्यक्तिविवक्षया ? गुरुत्वादावप्यस्त्येव । न, अन्यथा तदुपपत्तेः । तथाहि, स्वसमवेतविशेष-

विशिष्टत्वे सति स्वाश्रयैकजातीयव्यवच्छेदकत्वाद् विशेषगुणाः। आश्रयमात्रव्यवच्छेदकत्वं न सम्भवतीति स्वाश्रयपदम्। तथापि निर्विशेषणस्य रूपादेर्नाश्रयव्यवच्छेदकत्वमिति विशेषविशिष्टपदम्। संख्यादयोऽपि गन्धैकार्थसमवेताः क्षितेर्व्यवच्छेदकाः, स्नेहैकार्थसमवेताश्चोदकस्य, तन्निरासाय स्वसमवेतपदम्। यथा हि, रूपे शुक्लत्वादिविशेषणं समवेतं रसे च मधुरत्वादि नैवं स्नेहो गन्धो वा संख्यादौ समवेत इति व्यवच्छेदः। तथाप्यणुपरिमाणं परमाणूनां व्यवच्छेदकमिति स्वाश्रयैकजातीयपदम्। तथाहि परमाणुपरिमाणं स्वसमवेतविशेषणोपेतं स्वाश्रयस्य परमाणुव्रातस्य चतुर्विधस्य व्यवच्छेदकं नैकजातीयस्येति। एवं परममहत्वमपीति।

रूपञ्च स्वसमवेतशुक्लत्वाद्यनेकविशेषणोपेतमेकजातीयायाः क्षितेर्व्यवच्छेदकम्, नियमेन शुक्लत्वविशिष्टमुदकस्य, शुक्लभास्वरञ्च तेजस इत्यादि विशेषः पूर्वोक्त एव द्रष्टव्यः।

तदेवं स्वसमवेतविशेषविशिष्टत्वे सति स्वाश्रयैकजातीयव्यवच्छेदकत्वाद् विशेषगुणा एव। एत एव विशेषगुणा इत्यवधारणम्।

संख्यादयो वेगान्ताः सामान्यगुणा एव। विशेषगुणलक्षणरहितत्वाद् एत एव सामान्यगुणाः।

**एकैकेन्द्रियग्राह्यगुणाः**

**शब्दस्पर्शरूपरसगन्धा बाह्यैकैकेन्द्रियग्राह्याः।**

इदानीमेकानेकेन्द्रियग्राह्यत्वं दर्शयन्नाह*शब्दस्पर्शरूपरसगन्धाः*बाह्यैनैकैकेनेन्द्रियेण गृह्यन्त इति तद्ग्राह्याः। बाह्यग्रहणमन्तःकरणव्यवच्छेदार्थम्। तद्विवक्षा हि द्वीन्द्रियग्राह्यत्वात्। अवधारणञ्च एत एव नियमेन बाह्यैकैकेन्द्रियग्राह्याः, तथानेकेन्द्रियग्राह्या न भवन्तीति।

**द्वीन्द्रियग्राह्यगुणोद्देशः**

**संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वस्नेहवेगा द्वीन्द्रियग्राह्याः।**

संख्यादयो वेगान्ता द्वीन्द्रियग्राह्या एव। नियमेनैत एव द्वीन्द्रिय-

ग्राह्याः । बाह्यग्रहणमन्तःकरणव्यवच्छेदार्थमनुवर्तनीयम् ।

अथ स्नेहस्य कथं द्वीन्द्रियग्राह्यत्वम् ? त्वग्व्यापारे सति स्निग्धप्रत्ययदर्शनात् । यथा हि चक्षुर्व्यापारेण स्निग्धाः केशा इति प्रतिभासस्तथा स्नानोत्तरकालमपि त्वग्व्यापारेण स्निग्धप्रत्ययो दृष्ट इत्यन्वयव्यतिरेकाभ्यां द्वीन्द्रियग्राह्यत्वं निश्चीयते ।

अथ किमयमाप्यः पार्थिवो वेति विचारयिष्यामः स्नेहपरीक्षायाम् ।

**अन्तःकरणग्राह्यगुणोद्देशः**

**बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नास्त्वन्तःकरणग्राह्याः ।**

**अतीन्द्रियगुणोद्देशः**

**गुरुत्वधर्माधर्मभावना अतीन्द्रियाः ।**

बुद्ध्यादयः प्रयत्नान्तास्त्वन्तः करणेनैव गृह्यन्त इति तद्ग्राह्याः ।

गुरुत्वधर्माधर्मभावना हि अतीन्द्रिया एव । इन्द्रियाण्यतीत्य वर्तन्ते, तद्ग्राह्या न भवन्तीति । यथा च गुरुत्वमप्रत्यक्षं तथा वक्ष्यामस्तत्परीक्षायाम् ।

**गुणेषु कारणगुणपूर्वकाणामुद्देशः**

**अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वगुरुत्वद्रवत्वस्नेहवेगाः कारणगुणपूर्वकाः ।**

अपाकजरूपादिवेगान्ताः कारणगुणपूर्वका इति । अपाजकग्रहणं पार्थिवपरमाणुरूपव्यवच्छेदार्थम् ।

ननु तेऽपि कारणगुणपूर्वा भवन्त्येव । तथाहि, कारणं परमाणुस्तद्गुणः पार्थिवपरमाण्वग्निसंयोगस्तत्पूर्वा रूपादय इति कथं न कारणगुणपूर्वकाः ? तन्न । अभिप्रायापरिज्ञानात् । तथा चायमभिप्रायः, समवायिकारणेष्वेव गुणाः कारणगुणास्ते पूर्वं कारणं येषां कार्यगुणानां तेऽत्र कारणगुणपूर्वका विवक्षिताः । न चैवं पाकजा इति व्यवच्छिद्यन्ते ।

अथ सलिलादिपरमाणुरूपादयः पाकजत्वाभावेऽपि न कारणगुण-

पूर्वका इति । तन्न, पर्युदासप्रतिषेधस्य विवक्षितत्वात् । तथाहि, पाकाज्जाताः पाकजास्तत्प्रतिषेधेन अन्यगुणपूर्वकत्वं लभ्यत इति नित्यानां व्यवच्छेदः ।

नन्वेवमपि व्यर्थमपाकजग्रहणम्, एते कारणगुणपूर्वका एवेत्यवधारणासम्भवात् । तथाहि, द्रवत्ववेगावकारणगुणपूर्वकावपीति । न । स्पष्टार्थत्वादेत एव कारणगुणपूर्वका, न त्वेते कारणगुणपूर्वका एवेत्यवधारणम् । अबुध्यमानस्य पाकजैर्दोषाशङ्का स्यादिति स्पष्टार्थमपाकजग्रहणम् ।

अत्र चैकत्वैकपृथक्त्वग्रहणं द्वित्वद्विपृथक्त्वादिव्यवच्छेदार्थम् । ते ह्यकारणगुणपूर्वका इति ।

**अकारणगुणपूर्वकगुणकथनम्**

**बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा अकारणगणपूर्वकाः ।**

बुद्ध्यादयः शब्दान्तास्त्वकारणगुणपूर्वका एव । समवायिगुणपूर्वकाः कार्यगुणा न भवन्तीति । न त्वेत एव संयोगविभागपरत्वापरत्वद्वित्वद्विपृथक्त्वादीनामप्यकारणगुणपूर्वकत्वात् ।

अथाकारणगुणपूर्वकत्वाविशेषेऽप्यस्मिन् वाक्ये संयोगादीनामवचने किं प्रयोजनमिति चिन्त्यम् । अथापाकजरूपादिवेगान्तानामेव कारणगुणपूर्वकत्वामिधानात् शेषाणामकारणगुणपूर्वकत्वं विज्ञायते । एवं तर्हि बुद्ध्यादयोऽपि नाभिधेयाः, शेषाणामकारणगुणपूर्वकत्वमिति वाभिधेयं सकलभेदसङ्ग्राहकं वाक्यम् । अलं बुद्ध्यादिविशेषाभिधानेनेति ।

नैतदेवम् । विशेषवचनं स्पष्टार्थम् । अनेकधा शास्त्राभिहितमिति अन्तेवासिनामृज्वर्थपरिज्ञानमेव स्यादित्यूहशक्तेः संवर्धनार्थं संयोगादीनां स्वशब्देनावचनम् ।

अन्ये त्वेकवृत्तीनामेव विशेषगुणानामत्राभिधानं विवक्षितमिति मन्यन्ते । तत्तु न बुद्ध्यामहे, दूषणस्याप्रतिसमाधानात् ।

**संयोगजगुणोद्देशः**

**बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दतूलपरिमाणोत्तरसंयोग-**

**नैमित्तिकद्रवत्वपरत्वापरत्वपाकजाः संयोगजाः ।**

तथा बुद्ध्यादयः पाकजान्ताः संयोगजा इत्यत्र बुद्ध्यादयो भावनान्ताः पुरुषान्तःकरणसंयोगादुत्पद्यन्ते । शब्दश्च भेर्याकाशसंयोगात् । तूलपरिमाणञ्च प्रचयात् । उत्तरसंयोगः सूत्रपाठापेक्षया, संयोगजसंयोगः नैमित्तिकद्रवत्वमग्निसंयोगात् । परत्वापरत्वे तु दिक्कालपिण्डसंयोगात् । पाकजा इति पार्थिवपरमाणुरूपादयस्तेऽप्यग्निसंयोगजाः । इत्येत एव संयोगजाः, न त्वेते संयोगजा एव । तथा हि शब्दो विभागजः शब्दजोऽप्यस्तीति ।

**कर्मजगुणोद्देशः**

**संयोगविभागवेगाः कर्मजाः ।**

*संयोगविभागवेगाः* कर्मभ्यो जाताः कर्मजा इत्येत एव, न त्वेते कर्मजा एव । तथाहि, संयोगः संयोगादुत्पद्यते विभागश्च विभागाद् वेगो वेगादपीति ।

**विभागजगुणकथनम्**

**शब्दोत्तरविभागौ विभागजौ ।**

*शब्दोत्तरविभागौ* विभागाज्जातौ विभागजाविति । एतावेव विभागजौ, न त्वेतौ विभागजावेव । तथाहि, शब्दः संयोगजः शब्दजोऽप्यस्तीति । उत्तरविभागश्च, सूत्रपाठापेक्षया विभागजविभाग एव परिगृह्यते ।

**बुद्ध्यपेक्षाणां, समानासमानजात्यारम्भकानाञ्चोद्देशः**

**परत्वापरत्वद्वित्वद्विपृथक्त्वादयो बुद्ध्यपेक्षाः ।**
**रूपरसगन्धानुष्णस्पर्शशब्दपरिमाणैकत्वैकपृथक्त्वस्नेहाः**
**समानजात्यारम्भकाः ।**
**सुखदुःखेच्छाद्वेषप्रयत्नाश्च असमानजात्यारम्भकाः ।**
**संयोगविभागसंख्यागुरुत्वद्रवत्वोष्णस्पर्शज्ञानधर्माधर्मसंस्काराः**
**समानासमानजात्यारम्भकाः ।**

इदानीं के बुद्ध्यपेक्षाः, के च समानजात्यारम्भका इत्युपदर्शयति *परत्वापरत्वद्वित्वद्विपृथक्त्वादयः* बुद्धिमपेक्षन्ते स्वोत्पत्ताविति बुद्ध्यपेक्षा इति । आदिपदेन त्रित्वादिका परार्धान्ता संख्या तदवच्छिन्नञ्च पृथक्त्वं

गृह्यते । अवधारणन्तु एत एव बुद्ध्यपेक्षास्तथैते बुद्ध्यपेक्षा एव । बुद्धिं बिना न भवन्तीति ।

रूपादयः स्नेहान्ताः समानजात्यारम्भका इति । समाना तुल्या जातिर्येषां ते समानजातयस्तानारभन्त इति तदारम्भका एव, न त्वेत एव समानजात्यारम्भका उभयारम्भकाणामपि सद्भावात् । अत्र चानुष्णग्रहणमुष्णस्पर्शव्यवच्छेदार्थम्, तस्याप्युभयारम्भकत्वात् । एकत्वैकपृथक्त्वग्रहणं द्वित्वद्विपृथक्त्वादिव्यवच्छेदार्थम्, द्वित्वादेरसमानजात्यारम्भकत्वाद्, द्विपृथक्त्वादेश्चाकारणत्वादिति ।

तथा ह्युदकावयवेषु वर्तमाना रूपादयः स्नेहपर्यन्ताः कार्ये तानारभन्ते । गन्धस्तु क्षित्यवयवेषु वर्तमानस्तदवयविनि गन्धमारभते । शब्दश्चाकाशे वर्तमानस्तत्रैव शब्दमिति ।

सुखादयः प्रयत्नान्तास्त्वसमानजात्यारम्भका इति । असमानजातीयमेवारभन्त इति तदारम्भकाः, न त्वेत एव, अन्येषामपि सद्भावात् । तथा च सुखादिच्छा, द्वेषाद् द्वेषः, ताभ्यां प्रयत्नः, तस्मात् क्रियेति ।

संयोगादयः संस्कारान्ताः समानासमानजात्यारम्भका इति । समाना जातिर्येषां ते समानजातयस्तत्प्रतिषेधेन चासमानजातयः । तानारभन्त इति तदारम्भकाः । एत एव समानासमानजात्यारम्भकाः, नान्ये । तथैते समानासमानजात्यारम्भका एव नियमेन । तथाहि, संयोगात् संयोगः, विजातीयञ्च बुद्ध्यादि । विभागाद् विभागः, विजातीयश्च शब्दः । संख्यातः संख्या विजातीयञ्च परिमाणम् । गुरुत्वाद् गुरुत्वं विजातीयञ्च पतनम् । द्रवत्वाद् द्रवत्वं विजातीयञ्च स्यन्दनम् । उष्णस्पर्शाद् उष्णस्पर्शो विजातीयाश्च पाकजाः । ज्ञानाच्च ज्ञानं विजातीयाश्च संस्काराः । धर्माधर्माभ्यां धर्माधर्मौ विजातीये च सुखदुःखे । संस्कारात् संस्कारो विजातीयञ्च स्मरणम् ।

**स्वपराश्रयसमवेतारम्भकगुणोद्देशः**

**बुद्धिसुखदुःखेच्छाद्वेषभावनाशब्दाः स्वाश्रयसमवेतारम्भकाः ।**

**रूपरसगन्धस्पर्शपरिमाणस्नेहप्रयत्नाः परत्रारम्भकाः ।**

**संयोगविभागसंख्यैकत्वैकपृथक्त्वगुरुत्वद्रवत्ववेग-धर्माधर्मास्तूभयत्रारम्भकाः ।**

इदानीं स्वपराश्रयसमवेतारम्भकान् दर्शयति बुद्ध्यादयः शब्दान्ताः । स्वाश्रयसमवेतमेवारभन्त इति*स्वाश्रयसमवेतारम्भकाः* । न त्वेत एव उभयत्रारम्भकाणामपि सद्भावात् । तथाहि, बुद्धिरात्मनि वर्तते, तत्रैव ज्ञानं संस्कारहेतुर्भवति । सुखादिच्छा आत्मन्येव, दुःखाद् द्वेषस्तत्रैव । इच्छातः स्मरणप्रयत्नावात्मन्येव । तथा द्वेषादपि । भावनातो भावना स्मरणञ्चात्मन्येव । शब्दश्चाकाशे वर्तमानस्तत्रैव शब्दमारभत इति ।

रूपादयः प्रयत्नान्ताः परत्रेति । परस्मिन्नेवारभन्त इति परत्रारम्भका नत्वेत एव । तथा हि रूपरसगन्धस्पर्शपरिमाणस्नेहाः कारणेषु वर्तमानाः परत्र कार्ये तानारभन्ते । तथा प्रयत्नः पुरुषे वर्तमानः परत्र हस्तादौ क्रियामारभते ।

संयोगादयोऽधर्मान्तास्तूभयत्रारम्भकाः । एत एवोभयत्रारम्भकाः । तथैत उभयत्रारम्भका एव नियमेन । भेर्याकाशसंयोगो ह्याकाशे वर्तमानस्तत्रैव शब्दमारभते । भेरीदण्डसंयोगस्तु परत्र । तथा वंशदलाकाशविभागः स्वाश्रये, वंशदलविभागस्तु परत्राकाशे शब्दारम्भकः । संख्या कारणे वर्तमाना द्वित्वत्रित्वादिका कार्ये परिमाणम् एकत्वसंख्या च । एकत्वं स्वाश्रये तु द्वित्वादिकमारभत इति । एकपृथक्त्वग्रहणं द्विपृथक्त्वादिव्यवच्छेदार्थम्, तेषामकारणत्वात् । कारणेषु वर्तमानमेकपृथक्त्वं कार्येऽप्येकपृथक्त्वमारभते स्वाश्रयेषु द्विपृथक्त्वादिकमिति । गुरुत्वद्रवत्ववेगास्तु कारणगताः कार्येऽपि गुरुत्वादीनारभन्ते, स्वाश्रयेषु पतनस्यन्दनगमनक्रिया इति । धर्माधर्मौ च स्वाश्रयसमवेते सुखदुःखे पराश्रये तु क्रियामारभेते ।

**क्रियाहेतुगुणानामुद्देशः**

**गुरुत्वद्रवत्ववेगप्रयत्नधर्माधर्मसंयोगविशेषाः क्रियाहेतवः ।**

इदानीं क्रियाहेतूनाह गुरुत्वादिसंयोगविशेषान्ताः *क्रियाहेतवः* इति । तथाहि, गुरुत्वात् पतनम्, द्रवत्वात् स्यन्दनम्, वेगाद् गमनम्, प्रयत्नाद्

हस्तादौ क्रिया, धर्माधर्माभ्यामग्न्यादौ क्रिया। संयोगविशेषास्तु नोदनाभिघातसंयुक्तसंयोगास्तेऽपि क्रियाहेतव एव। गुरुत्वादीनां गुरुत्वजनकत्वस्याप्युपलब्धेः।

**असमवाय्यादिकारणगुणोद्देशः, अकारणगुणकथनञ्च**

**रूपरसगन्धानुष्णस्पर्शसंख्यापरिमाणैकपृथक्त्वस्नेहशब्दानामसमवायित्वम्।**

**बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनानां निमित्तकारणत्वम्।**

**संयोगविभागोष्णस्पर्शगुरुत्वद्रवत्ववेगानामुभयथा कारणत्वम्।**

**परत्वापरत्वद्वित्वपृथक्त्वादीनामकारणत्वम्।**

इदानीमसमवायिनिमित्तोभयथाकारणान्याह रूपादिशब्दान्तानामसमवायिकारणत्वम् इति।

अथ किमिदमसमवायिकारणत्वं नाम? प्रत्यासन्नस्य कार्यजनकत्वम्। यद् यस्य प्रत्यासन्नं सज्जनकत्वेनोपलब्धसामर्थ्यं व्याप्त्या तत् तस्योत्पत्तावसमवायिकारणम्।

का पुनरियं प्रत्यासत्तिः? एकार्थसमवायः। सा तु भिद्यते कार्यैकार्थसमवायलक्षणा कार्यकारणैकार्थसमवायलक्षणा चेति। कार्येण सहैकस्मिन्नर्थे समवायो लक्षणं चिह्नमस्या इति तल्लक्षणा। यथा शब्दस्य शब्दोत्पत्ताविति। कार्यशब्दो ह्याकाशे वर्तते तत्रैव कारणशब्दोऽपीति कार्यैकार्थसमवायोऽस्य प्रत्यासत्तिरिति। तथा बुद्ध्याद्युत्पत्तावात्मान्तःकरणसंयोगस्य। स ह्यात्मनि वर्तते बुद्ध्यादयोऽपि तत्रैवेति।

नन्वेवं बुद्ध्यादीनामपि स्वकार्योत्पत्तावेकार्थसमवायित्वादसमवायिकारणत्वमेव न निमित्तत्वम्? नैष दोषः। संयोगस्याशेषकार्योत्पत्तौ व्याप्त्या सामर्थ्योपलब्धेः, न चैवं बुद्ध्यादेरन्यतरस्येति। तस्य प्रतिनियतकार्योत्पत्तावेव सामर्थ्यावधारणात्। आत्मान्तःकरणसंयोगस्त्वशेषबुद्ध्याद्युत्पत्तावुपलब्धसामर्थ्यमिति स एवासमवायिकारणम्। न जातुचिन्मनःसंयोगादृते बुद्ध्यादयो भवन्तीति। तथा च सुषुप्त्यवस्थावसाने विज्ञानादिकमुत्पद्यत इति मनःसंयोगस्तत्र कारणम्।

नन्वेवमपि धर्माधर्मयोरशेषबुद्ध्याद्युत्पत्तौ व्याप्त्या कारणत्वादसमवायित्वं स्यात् ? न । विभुविशेषगुणानां विशिष्टप्रत्यासत्तेरुपलम्भात् । यथा हि, शब्दः शब्दान्तरमारभमाणः स्वावरुद्धनभोदेशसमनन्तरमेवारभते नैकार्थसमवायित्वाद् देशान्तरे [ तथा सति ] ब्रह्मभाषितस्याप्युपलम्भप्रसङ्गात् । तद्वद् धर्माधर्मावपि स्वावरुद्धात्मप्रदेशानन्तरं सुखदुःखादिकमारभेयाताम् इति स्वर्गादिस्थानेषु तदभावः स्यात्, आरभेते तु स्थानान्तरेष्वपि सुखदुःखादिकमिति निमित्तकारणत्वमेव । तस्मादात्मान्तःकरणसंयोग एव बुद्ध्याद्युत्पत्तावेकार्थसमवायितया असवायिकारणमिति स्थितम् ।

तथा कार्यं रूपादि पटे वर्तते, पटश्च तन्तुषु, तद्गताश्च रूपादयस्तत्रैवेति कार्यकारणैकार्थसमवायस्तेषां प्रत्यासत्तिरिति ।

नन्वेवमपि तन्तुरूपं रसाद्युत्पत्तौ प्रत्यासन्नम्, रसश्च रूपोत्पत्तावित्यसमवायित्वं स्यात् ? न । जनकत्वमिति विशेषणात् । यद् यस्योत्पत्तौ प्रत्यासन्नं सज्जनकं तदसमवायिकारणम् । न चैवं रूपं रसाद्युत्पत्तौ कारणं तदनुविधानस्यादर्शनात् । यथा हि शुक्लाद् रूपाच्छुक्लं पीताच्च पीतमिति कारणरूपानुविधानमस्ति नैवं रसादिनेति । नहि मधुरादम्लाद् वा तच्छुक्लं पीतं वा रूपमित्यन्वयो गृह्यते । तस्मात् प्रत्यासत्तावपि नासमवायित्वम् कारणस्य सतस्तद्विशेषनिरूपणात् ।

न चैवं समवायिकारणे प्रसङ्गस्तस्योक्तप्रत्यासत्त्यभावात् । न हि कार्येण तत्कारणेन च सहैकार्थसमवायस्तस्यास्ति, तत्रैव तत्कार्यस्य समवायात् ।

तथाहि, रूपरसगन्धानुष्णस्पर्शपरिमाणस्नेहाः कार्यकारणैकार्थसमवायादेवासमवायिकारणम् । संख्या तु द्वित्वादिका परिमाणोत्पत्तौ कार्यकारणैकार्थसमवायेनासमवायिकारणम् । तथा कारणैकत्वम् एकपृथक्त्वञ्च कार्यैकत्वैकपृथक्त्वोत्पत्तāविति । द्वित्वद्विपृथक्त्वाद्युत्पत्तावेकत्वैकपृथक्त्वादीनां कार्यैकार्थसमवायेनैवासमवायिकारणत्वमेव । एवं शब्दस्यापीत्युक्तम् ।

एतेषामसमवायिकारणत्वमेव, नत्वेतेषामेव, अन्येषामपि सद्भावात् । अत्र चानुष्णग्रहणमुष्णस्पर्शव्यवच्छेदार्थम्, तस्योभयथा कारणत्वात् ।

बुद्ध्यादिभावनान्तानां निमित्तकारणत्वम् इति । समवाय्यसमवायिलक्षणरहितस्य जनकत्वम् । न चासिद्धं विशेषणं प्रत्यासन्नस्य बुद्ध्यादेर्जनकत्वादिति वाच्यम्, पूर्वोक्तन्यायात् । अवधारणन्त्वेतेषां निमित्तकारणत्वमेव, नत्वेतेषामेव ।

तथाहि बुद्धिर्ज्ञानं संस्कारोत्पत्तौ कारणम्, सुखमिच्छायाः, दुःखं द्वेषस्य, इच्छाद्वेषौ प्रयत्नस्य, स च क्रियायाः, धर्माधर्मौ सुखदुःखयोः, भावना स्मरणस्येति ।

संयोगादिवेगान्तानामु *उभयथा कारणत्वम्* इति । असमवायिनिमित्तकारणत्वमिति । एतेषामेवोभयथा कारणत्वम्, तथैतेषामुभयथा कारणत्वमेवेति नियमेन ।

तथाहि, भेर्याकाशसंयोगस्यासमवायिकारणत्वम्, भेरीदण्डसंयोगस्य निमित्तत्वम् । एवं वंशदलाकाशविभागस्यासमवायिकारणत्वम्, वंशदलविभागस्य निमित्तत्वम् । उष्णस्पर्शस्योत्पत्तावसमवायिकारणत्वम्, पाकजेषु निमित्तत्वम् । एवं गुरुत्वद्रवत्ववेगानां स्वाश्रयक्रियोत्पत्तावसमवायिकारणत्वम्, आश्रयान्तरे निमित्तत्वमिति ।

परत्वापरत्वद्विपृथक्त्वादीनामकारणत्वमित्यादिपदेन त्रिपृथक्त्वादीनां ग्रहणम् ।

नन्वेतेषां ज्ञानाद्युत्पत्तावस्त्येव कारणत्वम् ? सत्यम् । तद्व्यतिरेकेणान्यत्राकारणत्वं विवक्षितमिति । समानजातीयारम्भकादिवाक्येऽपीदं विशेषणमूह्यम् । एतेषामकारणत्वमेव, नत्वेतेषामेव, पारिमाण्डल्यादेरप्यकारणत्वात् ।

**अव्याप्यवृत्तिगुणानां यावद्द्रव्यभाविगुणानाञ्चोद्देशः**

**संयोगविभागशब्दात्मविशेषगुणानां प्रदेशवृत्तित्वम् ।**

**शेषाणामाश्रयव्यापित्वम् ।**

**अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वसांसिद्धिकद्रवत्वगुरुत्वस्नेहानां यावद्द्रव्यभावित्वम् ।**

**शेषाणामयावद्द्रव्यभावित्वञ्चेति ।**

इदानीं केषां प्रदेशवृत्तित्वमाश्रयव्यापित्वञ्चेत्याह *संयोगविभागशब्दात्मविशेषगुणानां प्रदेशवृत्तित्वम्* आश्रयाव्यापकत्वं विवक्षितम् । न तु प्रदेशेऽवयवे वृत्तिः, निष्प्रदेशानां तदभावप्रसङ्गात् । एतेषामेवाश्रयाव्यापित्वम्, एतेषां प्रदेशवृत्तित्वमेव ।

*शेषाणामाश्रयव्यापित्वम्* इति । उक्तेभ्योऽन्ये शेषास्तेषामाश्रयव्यापित्वम् । कथमेतत् ? आश्रयोपलम्भे सति तज्जिघृक्षायामवश्यं ग्रहणम् । यथा पटोपलम्भे रूपजिघृक्षायामवश्यं तद्ग्रहणमिति । येषान्त्वाश्रयाव्यापित्वं न तेषामाश्रयोपलम्भे, सत्यामपि जिघृक्षायामिन्द्रियार्थसन्निकर्षे चावश्यं ग्रहणमस्ति । यथा पर्वतस्यापरभागवर्त्तिनां संयोगो नावश्यं तदुपलम्भेऽप्युपलभ्यत इति ।

अपाकजादिस्नेहान्तानां *यावद्द्रव्यभावित्वम्* इति । यावद्द्रव्यं भवन्ति तच्छीलाश्चेति यावद्द्रव्यभाविनस्तेषां भावो यावद्द्रव्यभावित्वम्, आश्रये सत्यविनाशित्वमिति यावत् ।

*शेषाणामयावद्द्रव्यभावित्वम्* इति । उक्तेभ्योऽन्ये शेषास्तेषां सत्यप्याश्रये विनाश इति ।

इति गुणसाधर्म्यप्रकरणम् ।

# गुणवैधर्म्यप्रकरणम्

**रूपादीनां सर्वगुणानां प्रत्येकमपरसामान्यसम्बन्धाद् रूपादिसंज्ञा भवन्ति।**

अथेदानीं वैधर्म्यं प्रतिनियतमाह *रूपादीनां सर्वगुणानां प्रत्येकमपरसामान्यसम्बन्धाद् रूपादिसंज्ञा भवन्ति* इत्यादि। रूपमादिर्येषां ते रूपादयस्तेषाम्। न ज्ञायते कियतामतः सर्वगुणानामिति। सर्वे च ते गुणाश्चेति सर्वगुणास्ते च रूपादय एवभिप्रेता नान्य इति, तेषाम् एकमेकं प्रति प्रत्येकम्। अपरसामान्यसम्बन्धादिति। गुणत्वापेक्षया अपरसामान्यं रूपत्वादि, तत्सम्बन्धाद् रूपादिसंज्ञा भवन्ति। रूपत्वसम्बन्धाद् रूपमिति संज्ञा, रसत्वसम्बन्धाच्च रस इति। एवमन्येष्वपीति।

**रूपवैधर्म्यम्**

**तत्र रूपं चक्षुर्ग्राह्यम्। पृथिव्युदकज्वलनवृत्ति, द्रव्याद्युपलम्भकम्, नयनसहकारि, शुक्लाद्यनेकप्रकारम्, सलिलादिपरमाणुषु नित्यम्, पार्थिवपरमाणुष्वग्निसंयोगविरोधि, सर्वकार्यद्रव्येषु कारणगुणपूर्वकम्, आश्रयविनाशादेव विनश्यतीति।**

तत्रादावबुद्दिष्टत्वाद् रूपस्य सद्भावे प्रमाणं लक्षणम् आश्रयम् अर्थक्रियाभेदं नित्यत्वम् उत्पत्तिविनाशकारणञ्च दर्शयन्नाह *रूपं चक्षुर्ग्राह्यम्* इत्यादिना।

तत्र रूपमेव चक्षुर्ग्राह्यं न रसादि। रूपं चक्षुषैव गृह्यतेऽन्येन्द्रियपरिच्छेद्यं न भवतीत्यवधारणस्य प्रक्रमापेक्षितया न द्रव्यादौ चक्षुर्ग्राह्यत्वप्रतिषेधः। तथाहि, द्रव्यादेश्चक्षुर्ग्राह्यत्वसिद्धौ "अनेकद्रव्येण समवायात् स्वगतविशेषाच्च रूपं प्रत्यक्षम्" (वै० सू० ४।१।८), "एतेन रसादिषु ज्ञानं व्याख्यातम्" (वै० सू० ?) इत्यतिदेशे चक्षुर्ग्राह्यत्वाशङ्कायां तद्व्यवच्छेदार्थमेवावधारणं न द्रव्यादौ तद्वृत्तित्वप्रतिषेधपरम्। अभिप्रेतञ्च समुद्गीयमानावधारणं शाक्यैरिति वक्ष्यामो लैङ्गिकज्ञाने।

सूत्रार्थस्तु, अनेकं द्रव्यं जनकमस्येतीत्यनेकद्रव्यं तेन सह समवायात् स्वगतविशेषनियतसद्भावे क्वचिद् रूपोपलब्धिर्यदभावाच्चानुपलब्धिः स एव सहकारिविशेषोऽपदिश्यते । तस्माच्च रूपं प्रत्यक्षम् । एतच्च रसनादि-प्रत्यक्षे समानमिति ।

*पृथिव्युदकज्वलनवृत्ति* इत्याश्रयनिरूपणम्, पूर्वपदापेक्षं वा लक्षण-मिति । तथाहि, चक्षुर्ग्राह्यत्वं द्रव्यत्वस्याप्यस्तीति चक्षुषैव गृह्यत इति [ सावधारणं ] विशेषणम् । तथापि चक्षुषैव गृह्यते रूपत्वसामान्यमिति पृथिव्युदकज्वलनवृत्तिपदम् । पृथिव्यादिवृत्तित्वञ्चान्येषामप्यस्तीति नियम-ग्रहणम् । अतो रूपम्, इतरस्माद् भिद्यते, नियमेन पृथिव्युदकज्वलनवृत्तित्वे सति चक्षुषैव गृह्यमाणत्वात्, यस्तु न भिद्यते न चासावेवम्, यथा रसादिरिति ।

* द्रव्याद्युपलम्भकम् * इत्यर्थक्रियाकथनम् । द्रव्यादीनुपलम्भयतीति द्रव्याद्युपलम्भकम्, द्रव्योपलब्धेः कारणमिति । तथा "महत्त्वा-दनेकद्रव्यवत्त्वाद् रूपविशेषाच्च द्रव्यं प्रत्यक्षम्" (वै० सू० ४।१।६) "तत्स-मवायाच्च गुणादयोऽपि प्रत्यक्षाः" (वै० सू० ?) इत्युपलब्धौ रूपविशेषस्य कारणत्वमुक्तम् । पूर्वपदापेक्षमेतल्लक्षणमभ्यूह्यम् ।

*नयनसहकारी* इति स्वगतरूपोत्कर्षाद् बाह्यरूपप्रकाशकमित्युपदर्श-यति । न च पूर्वेणाविशेषः, करणस्थस्य रूपोत्कर्षस्याभिधानात्, प्राक्तनेन तु कर्मगतस्येति ।

*शुक्लाद्यनेकप्रकारम्* इति भेदनिरूपणम् । तदप्यसाधारणमेव । *सलिलादिपरमाणुषु नित्यम्*, विनाशकारणाभावात् । *पार्थिवपरमाणुष्व-ग्निसंयोगविरोधि* इति, अग्निसंयोगेन विरोधो विनाशोऽस्येति । न चानु-त्पत्तिमतो विनाशः सम्भवतीत्यन्यस्योत्पत्तिविनाशकारणस्याभावाद् अग्नि-संयोगादेवोत्पद्यते । सर्वकार्येषु कारणगुणपूर्वप्रक्रमेणोत्पत्तिराश्रयविनाशा-देव विनाश इति वक्ष्यामः पाजजरूपपरीक्षायाम् ।

रसवैधर्म्यम्

**रसो रसनग्राह्यः, पृथिव्युदकवृत्तिः, जीवनपुष्टिबलारोग्यनिमित्तम् ।**

**रसनसहकारी, मधुराम्ललवणतिक्तकटुकषायभेदभिन्नः । अस्यापि नित्यानित्यत्वनिष्पत्तयः पूर्ववत् ।**

*रसो रसनग्राह्यः* इति सद्भावे प्रमाणम् । *पृथिव्युदकवृत्तिः* इत्याश्रयनिरूपणम्, पूर्वपदापेक्षं वा लक्षणमिति । तथाहि, पृथिव्युदकवृत्तित्वमन्येषामप्यस्तीति रसनग्राह्यपदम् । रसनग्राह्यञ्च रसत्वादिसामान्यं भविष्यतीति पृथिव्युदकवृत्तिपदम् । अतो रसः, इतरस्माद् भिद्यते, पृथिव्युदकवृत्तित्वे सति रसनग्राह्यत्वात्, यस्त्वितरस्मादरसादेर्न भिद्यते न चासावेवम्, यथा गन्धादिरिति ।

*जीवनपुष्टिबलारोग्यनिमित्तम्* इत्यर्थक्रियानिरूपणम् । जीवनन्तु उपभोगदायककर्मसचिवस्यात्मनः स्वशरीरावरुद्धेन मनसा संयोगः, तस्य तु निमित्तम् शरीराप्यायननिमित्तत्वात् । पुष्टिरवयवोपचयः । सा च विशिष्टरसोपयोगाद् भवतीति । तथाहि, रसोपयोगादान्तरेण तेजसा पूर्वद्रव्यनिवृत्तौ स्वतन्त्रेषु परमाणुषु श्यामादिनिवृत्तिद्वारेणोत्पन्नपाकजैर्द्व्यणुकादिप्रक्रमेण शरीरारम्भः प्रतिक्षणमाहारोपयोगे सति द्रष्टव्यः । न चारभ्यारम्भकवादः सम्भवतीत्युक्तं पृथिव्यधिकारे। बलमुत्साहस्तस्य प्राणसंवर्धनद्वारेण निमित्तम् । आरोग्यं रोगाभावस्तस्यापि निमित्तं विशिष्टरसोपयोगे सति तच्छ्रवणात् ।

*रसनसहकारी* इति । स्वगतरसोत्कर्षाद् बाह्यरसस्याभिव्यञ्जक इत्युक्तं पूर्वम् ।

*मधुराम्ललवणतिक्तकटुकषायभेदभिन्नः* इति विभागः । सोऽप्यसाधारणत्वाल्लक्षणम् । *अस्यापि नित्यानित्यत्वनिष्पत्तयः पूर्ववदिति* । सलिलपरमाणुषु नित्यं पार्थिवेष्वग्निसंयोगादुत्पद्यते विनश्यति च । कार्येषु कारणगुणपूर्वः, आधारविनाशादेव विनश्यतीत्यतिदेशार्थः ।

**गन्धवैधर्म्यम्**

**गन्धो घ्राणग्राह्यः, पृथिवीवृत्तिः, घ्राणसहकारी, सुरभिरसुरभिश्च, अस्याप्युत्पत्त्यादयः पूर्ववत् ।**

*गन्धो घ्राणग्राह्यः* इति सद्भावे प्रमाणम् । *पृथिवीवृत्तिः* इत्या-

श्रयनिरूपणम्, पूर्वपदापेक्षं वा लक्षणम्। तथा हि घ्राणग्राह्यत्वं गन्धत्वादेरप्यस्तीति पृथिवीवृत्तिरिति विशेषणम्। पृथिवीवृत्तित्वमन्यस्याप्यस्तीति घ्राणग्राह्यपदम्। घ्राणग्राह्यत्वे सति पृथिवीवृत्तित्वं लक्षणमिति।

*घ्राणसहकारी* इति स्वगतगन्धोत्कर्षाद् बाह्यगन्धप्रकाशकमित्यर्थक्रियानिरूपणम्। पुनरपि *सुरभिरसुरभिश्च* इति विभागः।

*अस्याप्युत्पत्त्यादयः पूर्ववत्* इति। परमाणुष्वग्निसंयोगादुत्पद्यते विनश्यति च। कार्ये तु कारणगुणपूर्वकः, आधारविनाशादेव विनश्यतीत्यतिदेशार्थः।

**स्पर्शवैधर्म्यम्**

**स्पर्शस्त्वगिन्द्रियग्राह्यः, पृथिव्युदकज्वलनपवनवृत्तिः, त्वक्सहकारी, रूपानुविधायी, शीतोष्णानुष्णाशीतभेदात् त्रिविधः। अस्यापि नित्यानित्यत्वनिष्पत्तयः पूर्ववत्।**

*स्पर्शस्त्वगिन्द्रियग्राह्यः* इति प्रत्यक्षपरिच्छेद्यत्वं दर्शयति। *पृथिव्युदकज्वलनपवनवृत्तिः* इत्याश्रयनिरूपणञ्च चतुर्णां स्पर्शवत्त्वमित्यनेन न पुनरुक्तम्। तत्र द्रव्यधर्मस्याभिधानात्, इह तु स्पर्शधर्मस्येति। पूर्वपदापेक्षं वा लक्षणम्। तथा च पृथिव्यादिवृत्तित्वमन्येषामप्यस्तीति त्वगिन्द्रियग्राह्यपदम्। तद्ग्राह्यञ्च स्पर्शत्वादिसामान्यमिति पृथिव्यादिवृत्तिपदम्।

यदि संख्यादीनामपि त्वगिन्द्रियग्राह्यत्वे सति पृथिव्यादिवृत्तित्वं सम्भाव्येत, अवधारणं कार्यम्। अतः स्पर्शः, इतरस्माद् भिद्यते, त्वगिन्द्रियग्राह्यत्वे सति नियमेन पृथिव्यादिचतुर्द्रव्यवृत्तित्वात्, यस्त्वितरस्माद् न भिद्यते न चासावेवम्, यथा रूपादिरिति।

*त्वक्सहकारी* इति। स्वगतस्पर्शोत्कर्षात् त्वगिन्द्रियं बाह्यस्पर्शप्रकाशकमित्यर्थक्रियानिरूपणम्।

अथ त्वगिन्द्रियं स्पर्शस्य प्रकाशकम्। कस्मात्? संयुक्तसमवायात्। त्वगिन्द्रियेण संयुक्तं द्रव्यं तत्समवायात् स्पर्शो गृह्यत इति। नन्वेवं संयुक्तसमवायस्याविशेषाद् रूपादिप्रकाशकमपि स्याद् विशेषो वा वाच्यः, तन्न, स्पर्शोत्कर्षवद् रूपाद्युत्कर्षस्याभावात्। तथाहि, रूपादिषु मध्ये स्पर्शस्यैवो-

पलम्भान्यथानुपपत्त्या ज्ञायते नियामकं कारणम्, नियमहेतुं बिना नियतस्य कार्यस्यानुपपत्तेः । तत्र स्पर्शोत्कर्षो नियामकः स्पर्शत्वं वा विषयगतम् । नचैतद् रूपादिषु सम्भवतीति स्पर्शत्वस्य तत्रासम्भवात् । रूपाद्युत्कर्षस्यापि त्वगिन्द्रियेण कार्याभावेनैवाभावप्रसिद्धेः । तथा च सूत्रकारेणाप्युक्तम् ''रूपादिषु स्पार्शनं ज्ञानमिति कस्मान्न भवतीति तदभावात्'' (वै० सू० ?) स्पर्शत्वसामान्यस्याभावात्, यत्रैव स्पर्शत्वसामान्यं तत्रैव स्पार्शनं ज्ञानमिति । व्यतिरेको लभ्यत एव । स्पर्शत्वाभावस्तु त्वग्ग्राह्यत्वाभावस्य ज्ञापको न कारक इति । न च विशिष्टसन्निकर्षव्यतिरेकेणान्या योग्यता सम्भाव्यते, अन्वयव्यतिरेकाभ्यां तस्यैव व्यापारोपलब्धेरित्यलम् ।

*रूपानुविधायी* इति साहचर्यं दर्शयति । रूपमनुविदधाति तच्छीलश्चेति तदनुविधायी । यत्र रूपं तत्रावश्यं स्पर्श इति । एवं रसगन्धानुविधायित्वमपीति । *शीतोष्णानुष्णाशीतभेदात् त्रिविधः* इति विभागकथनम् । *अस्यापि नित्यानित्यत्वनिष्पत्तयः पूर्ववत्* इति । सलिलादिपरमाणुषु नित्यः पार्थिवेष्वग्निसंयोगविरोधी । कार्येषु कारणगुणपूर्वकस्तद्विनाशाद् विनश्यतीत्यतिदेशार्थः ।

**रूपादीनां पाकजोत्पत्तिप्रकारः**

## पार्थिवपरमाणुरूपादीनां पाकजोत्पत्तिविधानम् ।

अथेदानीं *पार्थिवपरमाणुरूपादीनाम्* इति परीक्षाशेषनिवर्तनाप्रकरणम् । तथा हि रूपादीनां पूर्वमुद्देशलक्षणाभिधानेऽपि (स्पर्शो ?) न परीक्षितः, प्रतिज्ञातश्च तदतः परीक्षार्थमिदमारभ्यते । पृथिव्या इमे पार्थिवाः ।

ननु चात्र भेदानुपपत्तेः कथं षष्ठी, तद्धितप्रत्ययश्चेति । तयोर्भेदे सत्युपलम्भात् ? न । कार्यरूपायाः पृथिव्या विवक्षितत्वात्, तज्जनकाश्च परमाणवस्ततो भिन्ना एवेति पार्थिवा इत्युच्यन्ते । जातिर्वा पृथिवीशब्देन विवक्षिता, तस्या इमे तत्सम्बन्धिनः पार्थिवाः । ते च ते परमाणवश्च तेषां रूपादय इति । आदिपदेन रसगन्धस्पर्शा एव गृह्यन्ते, न संख्यादयः, तत्परीक्षाशेषपरत्वेनैव सम्बन्धात् ।

अतस्तेषां *पाकजोत्पत्तिविधानम्* प्रकार इति । अथ पाकाज्जाताः पाकजा इत्युत्पत्त्यर्थस्य जनिना प्रतिपादितत्वाद् व्यर्थमुत्पत्तिग्रहणम् ? न । उत्तरपदेन सम्बन्धात् । तथाहि, पाकजानामुत्पत्तिरेव विधीयतेऽनेनेति विधानं प्रमाणमुपेयम् । पूर्वगुणविलक्षणानां रूपादीनामुत्पत्तिः कार्यं सैव प्रमाणमिति वक्ष्यामः ।

यद्वा पच्यतेऽनेनेति पाकस्तेजोद्रव्यम्, पच्यत इति वा पाकः पार्थिवपरमाणवश्चेति पाकौ ताभ्यां जातः पाकजः, पार्थिवपरमाण्वग्निसयोगस्तस्मादुत्पत्तिः पार्थिवपरमाणुरूपादीनां श्यामादिविनाशश्चेत्युत्तरवाक्यसामर्थ्यात् ।

अन्ये तु श्यामादिविनाशोऽध्याहारेण लभ्यत इति मन्यमानाः पच्यतेऽनेनेति पाकोऽग्निसंयोगः, तस्माज्जातः पाकजः, श्यामादिविनाशः । तत एव पाकादुत्पत्तिर्विशिष्टरूपादीनामिति कष्टव्याख्यानं कुर्वते । तच्चासत् । अध्याहारादेर्दूषणस्यापरिहारात् ।

न चाभिव्यक्तिनिवृत्त्यर्थमुत्पत्तिग्रहणमिति वाच्यम्, परमतस्याप्रसिद्धत्वात् ।

**तत्र प्रथमं कार्यद्रव्यविनाशप्रकारः**

**घटादेरामद्रव्यस्याग्निना सम्बद्धस्याग्न्यभिघातान्नोदनाद्वा तदारम्भकेष्वणुषु कर्माण्युत्पद्यन्ते । तेभ्यो विभागाः; विभागेभ्यः संयोगविनाशाः, संयोगविनाशेभ्यश्च कार्यद्रव्यं विनश्यति ।**

अथ केन प्रकारेण पाकजा जायन्त इत्युपदर्शयति *घटादेरामद्रव्यस्य* इत्यादिना । घटादेरित्यादिपदेन शरीरादेरप्यवरोधः । तत्र हि पाकजोत्पत्तिपरिज्ञानात् तदासक्तिनिवृत्तौ विरक्तस्य श्रेयः सम्पद्यत इति । आमद्रव्यस्येति पक्वव्यवच्छेदार्थम् ।

यद्यपि पार्थिवपरमाणुष्वहेतुकस्य रूपादेरसम्भवात् तेऽपि पाकादुत्पन्नास्तथापि विशिष्टरूपापेक्षया श्यामादय इत्युच्यन्ते । तदाश्रयस्यामद्रव्यस्य ये आरम्भकाः पारम्पर्येण परमाणवस्तेषु कर्माण्युत्पद्यन्ते । कुतः ? *अग्न्यभिघातान्नोदनाद् वा* ।

अभिघातस्तु वेगापेक्षः परस्परविभागहेतोरेकस्य कर्मणः कारणम्। नोदनन्तु अविभागहेतोरनेकस्येति वक्ष्यामः कर्माधिकारे।

अन्ये तु घटस्यादिद्व्यणुकं तदारम्भकाः परमाणवः साक्षादिति मन्यन्ते।

तत्र कर्मोत्पत्तावणवः समवायिकारणं तत्संयोगोऽसमवायिकारणं वेगादि निमित्तकारणमिति। तेभ्यो विभागास्ते तु द्रव्यारम्भकसंयोगप्रतिद्वन्द्विनः। तत्राप्यसमवायिकारणं कर्म, परमाण्वोः समवायित्वं शेषं निमित्तकारणमिति। *विभागेभ्यः संयोगविनाशाः*। तेषां समवाय्यादिकारणानुपलब्धेर्निमित्तादेवोत्पत्तिः। न ह्यभावः समवेतः क्वचिदुत्पद्यमानो दृष्टः।

अत एवासमवायिकारणं नास्ति, एकार्थसमवायाभावात्। निमित्तकारणन्तु अन्वयव्यतिरेकाभ्यां व्याप्रियमाणं तदुत्पत्तावुपलब्धम्। संयोगविनाशेभ्यः कार्यद्रव्यं द्व्यणुकलक्षणं विनश्यतीति। जात्यपेक्षयैकवचनम्।

**परमाणुषु पूर्वरूपनाशानन्तरं पाकजरूपाद्युत्पत्तिः**

**तस्मिन् विनष्टे स्वतन्त्रेषु परमाणुष्वग्निसंयोगाद् औष्ण्यापेक्षात् श्यामादीनां विनाशः, पुनरन्यस्मादग्निसंयोगाद् औष्ण्यापेक्षात् पाकजा जायन्ते।**

**घटतद्रूपादीनामुत्पत्तिः**

**तदनन्तरं भोगिनामदृष्टापेक्षादात्माणुसंयोगादुत्पन्नपाकजेषु कर्मोत्पत्तौ तेषां परस्परसंयोगाद् द्व्यणुकादिक्रमेण कार्यद्रव्यमुत्पद्यते। तत्र च कारणगुणप्रक्रमेण रूपाद्युत्पत्तिः।**

तस्मिन् विनष्टे परमाणुष्वन्यस्मादग्निसंयोगात् श्यामादीनां निवृत्तिः। *पुनरन्यस्मादग्निसंयोगाद् औष्ण्यापेक्ष्यात् पाकजा जायन्ते* तत्र परमाणुः समवायिकारणम्, अग्निसंयोगोऽसमवायिकारणम्, उष्णस्पर्शो निमित्तकारणमिति।

*तदनन्तरम्* रक्ताद्युत्पत्तिक्षणानन्तरम्। उत्पन्नपाकजेष्वणुषु समवेतानि कार्याणि उत्पद्यन्ते। असमवायिकारणमाह *आत्माणुसंयोगात्* अदृष्टापेक्षात्। अदृष्टञ्च केषामित्याह *भोगिनाम्* इति।

कर्मोत्पत्तौ सत्यामनन्तरं विभागाः, तेभ्यः संयोगविनाशाः, ततः परमाणूनां परस्परेण संयोगाद् द्व्यणुकान्युत्पद्यन्ते । तत्र परमाण्वोः समवायित्वम्, तत्संयोगस्यासमवायिकारणत्वम्, शेषं निमित्तमिति, तदादिक्रमेण कार्यमुत्पद्यत इति । त्रिभिर्द्व्यणुकैस्त्र्यणुकमारभ्यते । त्र्यणुकैश्चानियमेन स्वकार्यमिति तावद् यावद् घटः । सर्वत्र कारणगुणपूर्वप्रक्रमेण रूपाद्युत्पत्तिरिति ।

ननु सर्वमेतदसम्बद्धम्, एतस्मिन् क्रमे प्रमाणाभावात् । तथाहि,

(१) परमाणौ क्रियायाः सद्भावे प्रमाणाभावात् तत्कार्यस्यासिद्धौ तद्द्व्यणुकस्य विनाशे [न] प्रमाणमस्ति ।

(२) अग्निसंयोगस्य नानात्वे, द्रव्यविनाशे, श्यामादिनिवृत्तौ, रक्ताद्युत्पत्तो, उत्पन्नपाकजेषु क्रियाक्रमेण तद्द्व्यणुकस्यैवोत्पत्तिरिति सर्वं प्रमाणशून्यमेव ।

(३) बाधकोपपत्तेश्च । तथा ह्यापाकनिक्षिप्तेषु घटादिषु कुलालस्य छिद्रप्रदेशेन निरीक्षमाणस्याक्षजं विज्ञानम् 'घटः पच्यते' इति । न चेदं संशयविपर्ययस्वरूपम्, तल्लक्षणालक्षिततत्वात्, बाधकानुपपत्तेश्च ।

(४) तथा पाकोत्तरकालं 'स एवायं घटः' इत्यबाध्यमानस्य प्रत्यभिज्ञानस्योपलब्धेः ।

(५) अवस्थानम् । उपरिस्थापितानाञ्च तृणकर्परादीनामपाताच्चावस्थायित्वम् । यदि हि परमाणवः पच्येरन् ऊर्ध्वस्थापितानां कर्परादीनाम् पातः स्यात्, परमाणूनाञ्च धारणसामर्थ्याभावात् ।

(६) तद्देशत्वतत्परिमाणत्वतत्संख्यात्वोपलब्धेश्च । यदि चोत्पन्नपाकजाः परमाणवो द्व्यणुकादिप्रक्रमेण घटादिकमारभेरन् तद्देशं, तावत् परिमाणम्, तत्संख्या च न स्यात्, नियमहेतोरभावात् । दृष्टश्चायं नियमस्तस्मिन्नेव देशे, तावत्परिमाणम्, तत्संख्या च । एवं घटादीनामवस्थायित्वम् ।

(७) न च घटादेर्विनाशे कर्त्रादिभिर्विना पुनरुत्पत्तिर्युक्ता । अथेश्वरादेः सद्भावाद् युक्तमिति चेत् । तथा हीश्वरः कर्ता कारणम्, अदृष्टादिपरमाणवः कर्मेति । नैतद् युक्तम् । क्षित्यादिकार्येष्विवास्मदादिसम्बन्धादितः कार्यानपेक्षस्य घटादिसम्पादनेऽपि सामर्थ्यानिवृत्तेः कुलालव्यापारवैयर्थ्यमेव स्यात् ।

(८) आवरणाभावश्च । तथाहि, वेगादग्निसम्बन्धादवयवक्रियाक्रमेण घटादेर्विनाशस्तथावेगाच्च चक्षुःसम्बन्धात् काचाभ्रस्फटिकादेः क्रियाक्रमेण विनाशे तद्व्यवहितेन सम्बद्धस्य चक्षुषः प्रकाशकत्वमित्यावरणाभावः स्यात् । अथ स्वच्छतया स्फटिकादिद्रव्यमिन्द्रियव्यवधायकं न भवतीत्युपपन्नमेवावृतस्यापि ग्रहणम् । तर्हि घटादिद्रव्यमपि तथास्वभावतया तेजोद्रव्यव्यवधायकं न भवतीत्यणुप्रवेशादन्तर्देशेऽप्युपपद्यत एव पाकः । अन्यथा ह्यावृतानावृतयोस्तुल्योपलब्धिः स्यात्, आवरणाभावस्योभयत्राविशेषात् ।

(९) यदि चाणुप्रवेशाद् द्रव्यस्य विनाशस्तर्हि बहिर्देशे शीतस्पर्शोपलम्भान्यथानुपपत्त्या उदकस्य निःसरणाद् आधारस्य विनाशे तत्पातः स्यात् । अथ सच्छिद्रद्रव्यमित्युदकस्य निःसरणम्, तर्हि तन्मार्गेणैव तेजोऽणुप्रवेशाद् अन्तर्देशे पाकः सम्पद्यत इति किं तद्विनाशेनेत्यलम् ।

सर्वमेतदबाधकमनैकान्तिकत्वात् । तथा ह्युदकपरिपूर्णे घटे वेगवत् सुचीद्रव्यसम्बन्धादवश्यं कण्ठप्रदेशे क्रिया । सा चोत्पन्ना द्रव्यारम्भकसंयोगप्रतिद्वन्द्विनं विभागमारभत इति प्रत्यक्षसिद्धम् । तस्मात् संयोगविनाशे तदारब्धस्य द्रव्यस्य निवृत्तिः, तस्यापि द्रव्यान्तरारम्भकत्वात् तन्निवृत्तौ तदारब्धनिवृत्तिरिति विनाशकारणसान्निध्याद् घटस्य विनाशः । अन्यथा हि विनाशकारणसान्निध्येऽप्यविनाशे कार्यस्य नित्यत्वमेव स्यात् । उपलभ्यते तु घट इति अवस्थितसंयोगैर्द्रव्यान्तरारम्भो निश्चीयते ।

तत्र च प्रत्यक्षं 'स एवायम्' इति प्रत्यभिज्ञानम् न व्यावृत्तम् । उपरिस्थापितद्रव्यस्य पातः, तद्देशत्वम्, तत्संख्यात्वम्, तत्परिमाणत्वम्, प्रत्यक्षेण च कर्त्रादेरनुपलब्धिस्तत्रास्तीत्यनेकान्तादसाधनम् । न च धटस्य विनाशेऽप्युदकस्यानाशितत्वं पातो वा दृश्यत इति (?) ।

**परमाणुष्वेव रूपादीनामुत्पत्तिः**

**न च कार्यद्रव्ये रूपादिविनाश उत्पत्तिर्वा सम्भवति, सर्वावयवेष्वन्तर्बहिश्च वर्तमानस्याग्निना व्याप्त्यभावात् । अणुप्रवेशादपि व्याप्तिर्न सम्भवति कार्यद्रव्यविनाशादिति ।**

अथ परमाणुषु पाकजा जायन्त इति किमत्रास्मदादीनां प्रमाणम् ? घटादिषु पूर्वगुणविलक्षणस्य गुणान्तरस्योत्पाद इति। स च घटादिषु वर्तमानः कथं परमाणुषु पाकजा जायन्त इति गमयेत्, तत्राग्निसंयोगेन तथानुपपत्तेः ? तदेवाह *न च कार्यद्रव्ये रूपादिविनाश उत्पत्तिर्वा सम्भवति*। कस्मात् ? *सर्वावयवेष्वन्तर्बहिश्च वर्तमानस्याग्निना व्याप्त्यभावात्*। तथाहि, अवयवी सर्वावयवेषु अन्तर्बहिश्च वर्तते। न चान्तर्देशेऽग्नेरनुप्रवेशोऽस्तीति व्याप्त्या सम्बन्धाभावाद् अपाकप्रसङ्गः।

अथ सूक्ष्मस्य तेजसोऽनुप्रवेशाद् अन्तर्देशे पाकः सम्पद्यत इत्याह *अणुप्रवेशादपि व्याप्तिर्न सम्भवति*। कस्मात् ? *कार्यद्रव्यविनाशादिति*। तथाहि, वेगवद्द्रव्यसम्बन्धस्य अन्यत्र क्रियाहेतुत्वेनोपलम्भाद् इहाप्यवयवे क्रियाजनकत्वम्। सा चावयवान्तरेण विभागं द्रव्यारम्भकसंयोगप्रतिद्वन्द्विनमारभते। तस्मात् संयोगनिवृत्तौ तदारब्धस्य कार्यद्रव्यस्य विनाशे तदारब्धस्यापि निवृत्तिरितिक्रमेण धटस्याप्यवश्यं विनाशः।

अथ घटावयवाः पच्यन्ते ? तत्राप्यन्तर्देशे पाको न स्यादिति तेजोऽणुप्रवेशेन विनाशः। तदेवमुत्तरोत्तरावयवेषु अग्न्यणुप्रवेशात् तद्विनाशे स्वतन्त्राः परमाणवः पच्यन्ते।

न च कार्यद्रव्ये पूर्वरूपादीनामवस्थाने रक्ताद्युत्पत्तिः स्यात्, गुणवति गुणान्तरप्रतिषेधात्। अतो रक्ताद्युत्पत्त्यन्यथानुपपत्त्या ज्ञायते पूर्वरूपादिनिवृत्तिः। सा चाश्रयविनाशादेव कार्यद्रव्ये। तथा च सूत्रम् "रूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याः" (वै० सू० ?) इत्याश्रयविनाशेन विनाशोऽभिहितः। "कार्यद्रव्येऽग्निसंयोगाच्च" (वै०सू० ?) "एतेन नित्येष्वनित्यत्वं व्याख्यातम्" (वै० सू० ?) इत्यग्निसंयोगस्य नित्येष्वेव रूपादिनिवर्तकत्वमुक्तम्। अतः कार्यद्रव्ये गुणान्तरप्रादुर्भावात् पूर्वरूपादिनिवृत्तिर्ज्ञायते। सा चाश्रयविनाशादेव, अग्निसंयोगस्य नित्यविषयत्वेन नियमात्।

एवं कपालानामप्यवस्थाने पूर्वरूपाद्यनिवृत्तौ रक्ताद्युत्पत्तिर्न स्यात्। अतः कार्येऽपि कारणरूपानुविधायितया श्यामादिकमुत्पद्यते। तदेवं तत्कारण-

कारणेष्वपि पूर्वगुणविलक्षणस्य गुणान्तरस्योत्पत्तिर्वाच्या । अन्यथा हि तत्कार्येष्वपि न स्यात् ।

सा चोत्पत्तिः पूर्वरूपादीनामवस्थाने न घटते, रूपवति रूपान्तरारम्भप्रतिषेधादिति पूर्वरूपादिनिवृत्तिर्वाच्या । सा चाश्रयविनाशादेवेति सकलस्यापि कार्यद्रव्यस्यापि विनाशः ।

न च परमाणुष्वपि पूर्वरूपादीनामवस्थाने रक्ताद्युत्पत्तिः स्यात् । तदभावात् द्व्यणुकस्यापि कारणगुणपूर्वक्रमेण श्यामादिकमेवोत्पद्यत इति विलक्षणरूपाद्यसम्भव एव । दृष्टश्च कार्ये गुणान्तरप्रादुर्भावस्तेन परमाणुषु रूपादिनिवृत्तौ रक्ताद्युत्पत्तिरिति । न च तत्राश्रयस्य विनाशः सम्भवतीत्यग्निसंयोगस्यैव निवर्तकत्वम्, कारणान्तरस्यासम्भवात् तस्यैवोत्पादकत्वमिति ।

यदपीदं 'सच्छिद्रद्रव्यम्' इत्युक्तं तत्र यदि कपालरन्ध्रापेक्षया ? तस्यान्तर्देशे पाको न स्यात् । अथ तदवयवरन्ध्रापेक्षया ? तस्यान्तर्देशे पाकाभावः । तदेवमुत्तरोत्तरावयवेष्वपि वाच्यं तावद् यावद् द्व्यणुकम् ।

अथ तस्यान्तर्देशाभावात् पाको भविष्यतीति ? न । तस्यापि वेगवदग्निसम्बन्धेन अवश्यं विनाशोपपत्तेः । श्यामादिविनाशश्च विना रक्ताद्युत्पत्तिर्न स्यात् । तद्विनाशश्चाश्रयविनाशादेवेत्युक्तपूर्वम् । स च संयोगविनाशात्, सोऽपि विभागात्, विभागश्च क्रियात इति गुणान्तरप्रादुर्भाव एव क्रियादिक्रमास्तित्वे प्रभाणमिति ।

अत्र तु प्रयोगः पार्थिवपरमाणुरूपादयः, संयोगजाः, विभागजविभागशब्दजशब्दान्यत्वानित्यत्वे सति नित्यस्य विशेषगुणत्वात्, सुखादिवत् । विभागजविभागशब्दजशब्देन व्यभिचारपरिहारार्थं तदन्यत्वे सतीति । सलिलादिपरमाणुरूपादिव्यवच्छेदार्थञ्च अनित्यपदम् । सामान्यगुणव्यवच्छेदार्थं विशेपगुणग्रहणम् । अनित्यव्यवच्छेदश्च नित्यपदेनेति ।

अन्ये तु घटादिगता रूपादयः, पारम्पर्येणाग्निसंयोगजाः, साक्षाद् घटमानत्वे सति अग्निसंयोगतद्भावभावित्वेनोत्पद्यमानत्वात्, श्रूयमाणाग्निशब्दवत् (?) इत्यनुमानं ब्रुवते । न चासिद्धं विशेषणमुक्तन्यायात् ।

यच्चेदं अग्निसंयोगस्य नानात्वे प्रमाणाभाव इति । एतदसत् । तस्यैव

कार्यभेदेन नानात्वोपचारात्। यदा श्यामादिनिर्वर्तिका वह्नौ क्रियोत्पन्ना तदा प्राक्तनाकाशादिदेशेन विभागमारभते, तदैव तदवयवे रक्ताद्युत्पादके च वह्नौ कर्मेत्येकः कालः (१), ततो विभागात् संयोगविनाशोऽवयवकर्मणा च अवयवान्तराद् विभागः क्रियते, रक्ताद्युत्पादकाग्निकर्मणा च आकाशादिदेशेनेत्येकः कालः (२), ततः श्यामादिनिवर्तकस्याग्नेः परमाणुना संयोगः, श्यामादीनां विनश्यत्ता, अवयवविभागाच्च द्रव्यारम्भकसंयोगविनाशः, श्यामाद्युच्छेदकस्याग्नेर्विनश्यत्ता, रक्ताद्युत्पादकस्याग्नेः प्राक्तनसंयोगविनाशः परमाणुना च संयोगस्योत्पद्यमानतेत्येकः कालः (३), ततः श्यामादीनां विनाशस्तदुच्छेदकस्याग्नेर्विनाशः (कर्म ?) संयोगस्य विनश्यत्ता, रक्तादिजनकस्याग्निसंयोगस्योत्पादो, रक्तादीनामुत्पद्यमानतेत्येकः कालः (४), ततो रक्तादीनामुत्पादः श्यामादिनिवर्तकाग्निसंयोगस्य विनाश (५) इति अग्निसंयोगस्य नानात्वम्। न च श्यामाद्युच्छेदकाग्निसंयोगस्य विनश्यदवस्थत्वाद् रूपाद्युत्पत्तावसमवायिकारणत्वमिति।

अन्ये तु श्यामादिनिवर्तकस्याग्नेः कर्मसमकालं तदवयवेऽपि कर्मसञ्चिन्तनात् श्यामादिनिवृत्तिसमकालमेव तत्संयोगस्य विनाश इति ब्रुवते।

अथोत्पन्नपाकजेषु क्रियाक्रमस्य सद्भावे किं प्रमाणम्? कार्यद्रव्यस्योत्पत्तिरेव। अन्यथा हि क्रियामन्तरेण परस्परमप्राप्तानां द्रव्यारम्भकत्वं न स्यात्।

अथ परमाणूनां द्व्यणुकारम्भकत्वेमेवेति प्रमाणाभावः? तन्न, एकत्व[मितर? वत्] बहुत्वपक्षे बाधकसद्भावात् द्वित्वसंख्योपेतानामेवारम्भकत्वप्रसिद्धेः। तथाहि, बहूनामारम्भकत्वे शतादिसंख्योपेतानामप्यारम्भकत्वमेव स्यात्। एवञ्च सति घटादिकार्यं परमाणुभिरारब्धमिति चेत्। भङ्गेऽवान्तरकार्यस्यानुत्पन्नत्वादुपलम्भो न स्यात्। उपलभ्यते तु घटस्य विनाशे तदवयवा इति, तदवयवेऽपि तदवयवा इति द्व्यणुकादिक्रमेणारम्भो निश्चीयते।

अथ "द्रव्याणि द्रव्यान्तरमारभन्ते" (वै० सू० १।१।१०) "संयोगानां द्रव्यम्" (वै० सू० १।१।२७) इति च सूत्रव्याघातः? न। द्विवचनबहुवचनाभ्यां विग्रहाश्रयत्वात्। तथाहि, द्रव्ये च द्रव्याणीत्येकशेषः। कार्यद्रव्या-

पेक्षया तु बहुवचनम् । बहूनि कार्यद्रव्याण्येव द्रव्यमारभन्ते । द्वित्वसंख्योपेतान्येव च नित्यानि, न तु नित्यान्येव, कार्यद्रव्येऽपि सद्भावात् ।

न चैकस्य क्रमयौगपद्याभ्यामारम्भकत्वम्, एकस्वभावत्वात् । तथा ह्येकः परमाणुर्न क्रमेण कार्यं करोति, समर्थस्य क्षेपायोगात्, युगपत् कृत्वा पुनरकरणे हेत्वभावः ।

न च समानपरिमाणतायां कार्यकारणभावो दृष्टः, क्षणभङ्गप्रतिषेधात्, कारणविभागाभावादविनाशित्वं कार्यद्रव्यस्य च प्रसज्यते ।

तथा संयोगश्च संयोगौ च संयोगाश्चेति संयोगाः । तेषां द्रव्यं कार्यमिति नित्यापेक्षया संयोगस्यैव कार्यद्रव्ये चानियम इत्यविरोधः ।

तदेवं द्वित्वसंख्योपेताः परमाणवः कार्यद्रव्यमारभन्ते, एकत्वबहुत्वपक्षे बाधकप्रमाणसद्भावे सत्यारम्भकत्वात् । द्वित्वन्तु द्व्यणुकारम्भकः, तन्तु द्वितयवत् । न हि बहुभिस्तन्तुभिर्द्वितन्तुकमारभ्यते, नाप्येकेनेति सविशेषणस्य हेतोरसद्भावः ।

अथ द्व्यणुकानि द्वित्वादिसंख्योपेतानि अनियमेन किमिति कार्यं नारभन्ते ? बाधकोपपत्तेः । तथा हि द्वयोर्द्व्यणुकयोरारम्भकत्वेऽणुपरिमाणोत्पत्तावेव कारणत्वमस्तीति व्यर्थारम्भप्रसङ्गः ।

न च द्व्यणुकद्वयस्य कारणपरमाण्वपेक्षया बहुत्वं सम्भवतीति वाच्यम् । (कारणं ?) न, कारणावृत्तिबहुत्वस्य परिमाणोत्पत्तावकारणत्वात् । कारणवृत्ति च बहुत्वं महत्त्वोत्पत्तौ कारणमिति दृष्टम् । अन्यथा हि द्व्यणुकेऽपि महत्त्वं स्यात् अकारणापेक्षितया बहुत्वस्य तत्रापि सम्भवात् । तथा (द्व्यणुक ?) द्व्यणुकस्यापि बहुत्वसंख्योपेतस्यैव महदारम्भकत्वमिति । परं द्व्यणुकस्यैतत् कल्पनीयमिति । एकस्य चारम्भकत्वं प्रतिषिद्धम् ।

अथ चतुष्ट्वादिसंख्योपेतानामनियमेनारम्भकत्वमिति नेष्यते, साक्षाद्घटाद्यारम्भकत्वप्रसङ्गात् । तद्भङ्गे च अवान्तरकार्यस्यानुपलब्धिरेवानुत्पन्नत्वात् । न च बहुत्वं बिना महत्त्वं सम्भाव्यत इति त्रित्वसंख्योपेतानामेवारम्भकत्वम् । तथाहि, द्व्यणुकानि, त्रित्वसंख्योपेतान्येव द्रव्यमारभन्ते, द्वित्वचतुष्ट्वादिपक्षे बाधकप्रमाणसद्भावे सति आरम्भकत्वात्, त्रितन्तुकारम्भे तन्तुत्रितयवत् ।

अत्र तु कियता कालेन द्व्यणुके रूपाद्युत्पत्तिरिति क्रिया निरूप्यते ।

(१) तत्र स्वकारणाद् द्व्यणुकस्य विनाशः, तत्कार्यस्य विनश्यत्ता, श्यामाद्युच्छेदकाग्निसंयोगस्योत्पादः, श्यामादीनां विनश्यत्ता, रक्ताद्युत्पादकाग्निसंयोगस्योत्पद्यमानता, विभागजविभागस्योत्पादः, परमाण्वोराकाशादिदेशेन संयोगस्य विनश्यत्तेत्येषामेकः कालः ।

(२) ततस्त्र्यणुकस्य विनाशः, तत्कार्यस्य विनश्यत्ता, श्यामादीनां विनाशः, श्यामाद्युच्छेदकाग्निसंयोगस्य विनश्यत्ता, रक्ताद्युत्पादकाग्निसंयोगस्योत्पादः, रक्तादीनामुत्पद्यमानता, आकाशद्व्यणुकसंयोगस्य विनाशः, उत्तरसंयोगस्योत्पद्यमानतेत्येषामेकः कालः ।

(३) ततस्तत्कार्यस्य विनाशात् तत्कार्यस्य विनश्यत्ता, श्यामाद्युच्छेदकाग्निसंयोगस्य विनाशः, रक्तादीनामुत्पादः, रक्ताद्युत्पादकाग्निसंयोगस्य विनश्यत्ता, तथोत्तरसंयोगस्येत्पादः, विभागविभागजविभागकर्मणां विनश्यत्ता, क्रियाया उत्पद्यमानतेत्येषामेकः कालः ।

(४) ततस्तत्कार्यविनाशः, तत्कार्यस्य विनश्यत्ता, विभागविभागजविभागकर्मणां विनाशः, रक्ताद्युत्पादकाग्निसंयोगस्य विनाशः, क्रियाया उत्पादः, विभागस्योत्पद्यमानतेत्येषामेकः कालः ।

(५) ततस्तत्कार्यविनाशात् तत्कार्यस्य विनश्यत्ता, विभागस्योत्पादः, संयोगस्य विनश्यत्तेत्येषामेकः कालः ।

(६) ततस्तत्कार्यविनाशात् तत्कार्यस्य विनश्यत्ता, संयोगस्य विनाशः, उत्तरसंयोगस्योत्पद्यमानतेत्येकः कालः ।

(७) ततस्तत्कार्यविनाशात् तत्कार्यस्य विनश्यत्ता, उत्तरसंयोगस्योत्पादः, द्व्यणुकस्योत्पद्यमानता, विभागकर्मणोर्विनश्यत्त्येत्येषामेकः कालः ।

(८) ततस्तत्कार्यस्य विनाशात् तत्कार्यस्य विनश्यत्ता, द्व्यणुकस्योत्पादः, रूपादीनामुत्पद्यमानता, विभागकर्मणोर्विनाश इत्येषामेकः कालः ।

(९) तत उत्पन्ने द्व्यणुके कारणगुणपूर्वप्रक्रमेण नवमे क्षणे रूपाद्युत्पत्तिरिति ।

यदा तु कार्यविनाशविशिष्टं [कालम्] अपेक्ष्येत्यस्य द्रव्यनाशविशिष्टं

[कालम्] अपेक्ष्य कारणयोर्वर्तमानो विभागः कार्यसंयुक्ताकाशदेशेन विभागमारभत इति व्याख्यातम्, तदा श्यामादिनिवृत्तिसमकालं विभागजविभागसञ्चिन्तनात् दशमे क्षणे द्वचणुके रूपाद्युत्पत्तिरिति चिन्तनीयम् ।

तथा च द्वचणुकविनाशे श्यामादिनिवृत्तिः, ततो रक्ताद्युत्पत्तिः, उत्तरसंयोगः, क्रियाविभागसंयोगविनाशः, परमाणूनाञ्च संयोगाद् द्व्यणुकोत्पत्तौ कारणगुणपूर्वप्रक्रमेण रूपाद्युत्पत्तिरिति । शेषं पूर्ववदिति । इदमेकस्मिन् परमाणौ द्रव्योत्पादिका[तद्विनाशिकेति च] क्रियाद्वयमधिकृत्योक्तम् ।

यदा त्वेकस्मिन् परमाणौ द्रव्यविनाशिकान्यस्मिंश्च द्रव्योत्पादिकेष्यते तदा कथम् ?

(१) तत्र द्रव्यारम्भकसंयोगविनाशसमकालं द्वितीयपरमाणौ द्रव्यारम्भकं कर्म, ततो द्रव्यारम्भकसंयोगविनाशाद् द्व्यणुकस्य विनाशः, तत्कार्यस्य विनश्यत्ता, श्यामाद्युच्छेदकाग्निसंयोगस्योत्पादः, श्यामादीनामुच्छिद्यमानता, रक्ताद्युत्पादकाग्निसंयोगस्योत्पद्यमानता, विभागजविभागस्योत्पादः, परमाणोराकाशादिदेशेन संयोगस्य विनश्यत्ता, द्वितीयपरमाणौ विभागस्योत्पादः [प्राक्तनसंयोगस्य] विनश्यत्तेत्येषामेकः कालः ।

(२) ततस्त्र्यणुकस्य विनाशः, तत्कार्यस्य विनश्यत्ता, श्यामादीनां विनाशः, तदुच्छेदकाग्निसंयोगस्य विनश्यत्ता, रक्ताद्युत्पादकाग्निसंयोगस्योत्पादः, रक्तादीनामुत्पद्यमानता, आकाशद्व्यणुकसंयोगस्य विनाशः, तस्य परमाणोराकाशादिदेशेन संयोगस्योत्पद्यमानता, द्वितीयपरमाणौ प्राक्तनसंयोगविनाशः, परमाणुना च संयोगस्योत्पद्यमानतेत्येषामेकः कालः ।

(३) ततस्तत्कार्यविनाशात् तत्कार्यस्य विनश्यत्ता, श्यामाद्युच्छेदकाग्निसंयोगस्य विनाशः, रक्तादीनामुत्पादः, परमाणोराकाशादिदेशेन संयोगस्योत्पादः, विभागजविभागकर्मणोर्विनश्यत्ता, द्वितीयस्य परमाणोः परमाण्वन्तरेण संयोगस्योत्पादः, तद्विभागकर्मणोर्विनश्यत्ता, द्व्यणुकस्योत्पद्यमानतेत्येषामेकः कालः ।

(४) ततस्तत्कार्यविनाशात् तत्कार्यस्य विनश्यत्ता, विभागजविभागकर्मणां विनाशः, द्वितीयपरमाणावपि विभागकर्मणोर्विनाशः, द्व्यणु-

कस्योत्पादः, रक्तादीनामुत्पद्यमानतेत्येषामेकः कालः ।

(५) ततो द्व्यणुकोत्पत्त्यनन्तरं पञ्चमे क्षणे कारणगुणपूर्वप्रक्रमेण रूपाद्युत्पत्तिरिति ।

तथा द्व्यणुकविनाशसमकालं द्वितीयपरमाणौ कर्मसञ्चिन्तनात् षट्क्षणा पाकजोत्पत्तिः । तथा श्यामादिनिवृत्तिसमकालं कर्मचिन्तायां सप्तक्षणा । रक्ताद्युत्पत्तिसमकालं[कर्मचिन्तनात्] अष्टक्षणा । तदनन्तरञ्च[कर्मचिन्तायां] नवक्षणा इत्यादि चिन्त्यम् ।

तत्रादौ द्व्यणुकानि पक्वापक्वैरपि परमाणुभिरारभ्यन्त इति पक्वापक्वान्युत्पद्यन्ते । ततस्तैस्त्र्यणुकमित्यादिप्रक्रमेण घटस्य पक्वापक्वस्योत्पादः ।

ततः पुनरनुत्पन्नपाकजेषु क्रियादिक्रमेण द्रव्यविनाशे स्वतन्त्रेषु परमाणुषु रक्ताद्युत्पत्तिः । ततः पुनः क्रियाक्रमेण उत्तरसंयोगोत्पत्तौ द्व्यणुकान्युत्पद्यन्ते । तत्र च कारणगुणपूर्वप्रक्रमेण पक्वेष्वेव रूपाद्युत्पद्यते । तैस्त्र्यणुकं पक्वमेवारभ्यते । पुनर्द्व्यणुकान्तरेष्वप्येवमेव क्रमेण रूपाद्युत्पत्तिः, ततस्त्र्यणुकादेरिति वाच्यम्, यावद् घटे विशिष्टरूपाद्युत्पत्तिरिति ।

नन्वग्निसम्बन्धस्यापि शेषाद् अनुत्पन्नपाकजेष्विव परमाणुषूत्पन्नपाकजेष्वपि क्रिया किमिति नेष्यते ? घटादेरनुत्पत्तिप्रसङ्गात् । यदि च परमाणुषूत्पन्नपाकजेषु आरब्धकार्येषु क्रिया स्यात्, प्रतिक्षणमुत्पत्त्यनन्तरं द्व्यणुकादिविनाशे घटादेरुत्पत्तिर्न स्यात् ।

अथ सर्वेषां परमाणूनां पाके सति द्व्यणुकादिप्रक्रमेण घटाद्युत्पद्यत इति मनुषे, तदसत् । उपरि स्थापितानां कर्परादीनां पातप्रसङ्गात्, परमाणूनां धारणसामर्थ्याभावात् । न चैतदस्ति । तस्मात् कार्योत्पत्त्यन्यथानुपपत्त्या ज्ञायते, अनुत्पन्नपाकजेष्वेव क्रियोत्पद्यते नोत्पन्नपाकजेषु, उपभोगप्रापकादृष्टस्य नियामकत्वादित्यलमतिविस्तरेण ।

अथ द्व्यणुकत्र्यणुकादीनां पक्वापक्वानामुत्पादपूर्वं पुनः पक्वानामेवेति कल्पनायां किं प्रमाणम् ? कार्यस्य तथादर्शनमेव । तथाहि, घटादिकार्यमादौ पक्वापक्वमुपलभ्यते, पुनः पक्वमेवेति कारणकारणेष्वप्यनुमेयः । अत्र च प्रयोगः, द्व्यणुकमादौ पक्वापक्वमुत्पद्यते, महतः पार्थिवद्रव्यस्यारम्भकत्वात्,

कपालवत् । तथा च त्र्यणुकमादौ पक्वापक्वमुत्पद्यते, महतः(?) पार्थिवद्रव्यस्य कार्यत्वात्, घटवदिति ।

न च युगपदशेषपरमाणुषु कर्मोत्पत्तिद्वारेण पाकजोत्पत्तिर्व्याख्येया, शीघ्रपाकानुपलब्धेः, उपरि स्थापितानाञ्च पातप्रसङ्गाच्चेति ।

संख्यावैधर्म्यम्

**एकत्वादिव्यवहारहेतुः संख्या ।**

**सा पुनरेकद्रव्या चानेकद्रव्या च । तत्रैकद्रव्यायाः सलिलादिपरमाणुरूपादीनामिव नित्यानित्यत्वनिष्पत्तयः । अनेकद्रव्या तु द्वित्वादिका परार्धान्ता ।**

अथेदानीमुद्देशक्रमेणावसरप्राप्तायाः संख्याया लक्षणपरीक्षार्थम् *एकत्वादिव्यवहारहेतुः संख्या* इत्यादिप्रकरणम् । व्यवहृतिर्व्यवहारो ज्ञानम्, व्यवह्रियतेऽनेनेति व्यवहारोऽभिधानम् तयोर्हेतुः संख्येत्युच्यमाने सर्वेऽपि पदार्थास्तथाभवन्तीत्येकादिग्रहणम् । तथाप्येकादिरूपस्य व्यवहारहेतुत्वमाकाशात्मनोर्विद्यत इति विशेषणत्वे सतीति विशेषणमूह्यम् । तथाप्येकत्वादिसामान्यम् एवं भवतीति द्रव्यविशेषणत्वे सति इति पदम् [ऊह्यम्] । तथाहि, संख्या, इतरेभ्यो भिद्यते, द्रव्यविशेषणत्वे सत्येकादिव्यवहारहेतुत्वात्, यस्तु न भिद्यते न चासावेवम्, यथा रूपादिरिति । व्यवहारो वा साध्यः ।

तत्र संख्यायास्त्वाश्रयद्वारेण भेदनिरूपणार्थं लक्षणेन लक्ष्यमाणस्यैकानेकत्वोपलब्धौ संशये सति तन्निरासार्थञ्च *सा पुनरेकद्रव्या चानेकद्रव्या च* इति वाक्यम् । एकमेव द्रव्यमाश्रयोऽस्या इत्येकद्रव्या । अनेकमेव [द्रव्यम्] (अत्रापि नश्यद्रूपायाः ?) आश्रयोऽस्या इत्यनेकद्रव्या *तत्रैकद्रव्यायाः सलिलादिपरमाणुरूपादीनामिव नित्यानित्यत्वनिष्पत्तयः* इत्यतिदेशं करोति ।

ननु चात्र नित्यत्वे साध्ये हेतुर्नास्ति, अनित्यत्वे तु दृष्टान्ताभाव इति न्यूनं वाक्यम् ? न । व्यतिरेकमुखेन हेतोर्लाभात्, विग्रहभेदेन दृष्टान्तस्येति । तथाहि, निष्पद्यमानत्वाद् अनित्यत्वमित्युक्ते सामर्थ्याद् गम्यत एवानिष्पद्यमानत्वेन नित्यत्वमिति । दृष्टान्तोऽपि सलिलमादौ यस्यासौ सलिलादिस्तस्य परमाणवः, तद्रूपादीनामिव नित्यत्वम् । यथा हि, सलिलादिपरमाणुषु अनि-

ष्पद्यमानत्वाद् रूपादयो नित्यास्तद्वद् एकत्वं नित्येष्वनिष्पद्यमानत्वेनैव नित्यमिति ।

अनित्यायान्तु सलिलस्यादिपाठापेक्षया पृथिवी, तस्याः परमाणवस्तद्रूपाणामिवेति । दृष्टान्तस्तु यथा हि पार्थिवपरमाणुरूपादयो निष्पद्यमानत्वाद् अनित्यास्तद्वदेकत्वं कार्येषु निष्पद्यमानत्वादनित्यमिति ।

न च पार्थिवपरमाणुरूपादीनामिव एकत्वादीनामग्निसंयोगादुत्पत्तिः, वैलक्षण्याप्रतिपत्तेः । स्पर्शे तु वैलक्षण्याप्रतिपत्तावप्यग्निसंयोगजत्वेऽनुमानमुक्तं पृथिव्यधिकारे । न च तत्सामान्यगुणेषु सम्भवतीति ।

अन्ये तु सलिलञ्च तदादिपरमाणवश्चेति तच्छब्दलोपेन समासं कुर्वते । अनित्यत्वे सलिलरूपादि दृष्टान्तः, नित्यतायाञ्च तदादिपरमाणुरूपमित्यलम् ।

अनेकद्रव्या तु, द्वित्वमेव आदिर्यस्याः सा, द्वित्वादिका । परार्धमेवान्तेऽवसाने यस्याः सा परार्धान्ता । न हि परार्धादूर्ध्वमियत्ताव्यवहारः सम्भवतीत्यागमे पठ्यते ।

द्वित्वोत्पत्तिविनाशप्रकारौ

**तस्याः खल्वेकत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो निष्पत्तिरपेक्षाबुद्धिविनाशाद् विनाश इति । कथम् ? यदा बोद्धुश्चक्षुषा समानासमानजातीययोर्द्रव्ययोः सन्निकर्षे सति तत्संयुक्तसमवेतसमवेतैकत्वसामान्ये ज्ञानोत्पत्तावेकत्वसामान्यतत्सम्बन्धतज्ज्ञानेभ्य एकत्वगुणयोरनेकविषयिणी एका बुद्धिरुत्पद्यते एकत्वसामान्यबुद्धेश्च विनश्यत्ता, ततस्तामपक्ष्यैकत्वाभ्यां स्वाश्रययोर्द्वित्वमारभ्यते ।**

*तस्याः खल्वेकत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो निष्पत्तिः, अपेक्षाबुद्धिविनाशाद् विनाशः* इति संक्षेपेणोत्पत्तिविनाशकारणं दर्शयति । ननु चात्र बहुत्वनिर्देशाद् द्वित्वोत्पत्तिर्न लभ्यते । न हि द्वित्वमेकत्वेभ्यो भवतीति । न । द्विवचनबहुवचनाभ्यां विग्रहाश्रयणात् । तथा ह्येकत्वेऽनेकत्वानि चेत्येकशेषः, प्रकृतिसारूप्यस्य विवक्षितत्वात् । वचनसारूप्येण त्वेकशेषाभ्युपगमे धवखदिरादिष्वेकशेषप्रसङ्गः स्यात् । अत एकत्वेभ्योऽनेकत्वसंख्योत्पत्तिरित्य-

नेन द्वित्वोत्पत्तिर्व्याख्यातैव ।

किंविशिष्टेभ्य इत्याह अनेको विषयो यस्याः सा अनेकविषया, सा चासौ बुद्धिश्च तया सहितान्येकत्वानि तेभ्यः । निष्पत्तिरित्यपेक्षाकारणनिर्देशः ।

अन्ये तु त्रित्वाद्युत्पत्तिरेवात्र सङ्ग्रहवाक्ये विवक्षिता । द्वित्वोत्पत्तिश्चोपरिष्टाद् भविष्यतीति मन्यन्ते । तच्चासत् । त्रित्वाद्युत्पत्तेरप्युपरि सद्भावेनानर्थक्यप्रसङ्गात् ।

एवञ्च संक्षेपेणोत्पत्तिविनाशकारणे प्रज्ञापिते विशेषाकाङ्क्षितया अज्ञस्य प्रश्नः कथमिति । केन रूपेण उत्पत्तिश्च विनाशश्च भवतीत्याह *यदा बोद्धुः* इत्यादि । तथाहि, बुध्यत इति बोद्धा, तस्य बोद्धुरात्मनश्चक्षुषा सह समानासमानजातीययोर्द्रव्ययोः सन्निकर्षे सतीत्यनियमं दर्शयति *समानासमान* इति समानजातीययोरसमानजातीययोश्च द्रव्ययोः सन्निकर्षे सतीति । *तत्संयुक्तसमवेतसमवेतैकत्वसामान्ये* ज्ञानमुत्पद्यत इति । तेन चक्षुषा संयुक्तं द्रव्यं, तत्समवेतमेकत्वगुणम्, तत्समवेतञ्च तदेकत्वसामान्यम्, तस्मिन् ज्ञानमुत्पद्यते पूर्वं, विशेषणत्वात् । तथाहि, विशेषणज्ञानमादौ, कारणत्वात्, विशेष्यज्ञानन्तु पश्चात्, कार्यत्वात् ।

अतएव एकत्वसामान्यज्ञानोत्पत्तौ सत्याम्, एकत्वसामान्यञ्च तत्सम्बन्धश्च, तज्ज्ञानञ्चेति एकत्वसामान्यतत्सम्बन्धतज्ज्ञानानि, तेभ्योऽनेकविषयिण्येका बुद्धिरुत्पद्यते । अनेकश्चासौ विषयश्चेत्यनेकविषयः, सोऽस्या विद्यते इत्यनेकविषयिणी । एका च न विषयभेदेऽपि भिद्यते ।

कश्चासावनेको विषय इत्याह *एक [त्व] गुणयोः* इति । एक [त्व] गुणश्चैक [त्व] गुणश्चेत्येक [त्व] गुणयोर्विषयभूतयोर्यथोक्ता बुद्धिरुत्पद्यते । *एकत्वसामान्यबुद्धेश्च विनश्यत्ता* । *ततस्तामपेक्ष्यैकत्वाभ्यां स्वाश्रययोर्द्वित्वमारभ्यते* अत्र च स्वाश्रययोरिति समवायिकारणनिर्देशस्तथा एकत्वाभ्यामित्यसमवायिकारणस्य, तामपेक्ष्येति अपेक्षाबुद्धेर्निमित्तकारणत्वम् । एकत्वसामान्यज्ञानस्य च विनाशः ।

**ततः पुनस्तस्मिन् द्वित्वसामान्यज्ञानमुत्पद्यते । ततः पुनर्द्वित्वसा-**

**मान्यज्ञानाद् अपेक्षाबुद्धेर्विनश्यत्ता, द्वित्वसामान्यतत्सम्बन्धतज्ज्ञानेभ्यो द्वित्वगुणबुद्धेरुत्पत्तिरित्येकः कालः ।**

ततः समुत्पन्ने द्वित्वे तत्संयुक्तसमवेतसमवायाद् द्वित्वसामान्ये ज्ञानमुत्पद्यते पूर्वम्, विशेषणत्वात् । तस्मात् सामान्यज्ञानाद् अपेक्षाबुद्धेर्विनश्यत्ता विनाशकारणसान्निध्यम् । ज्ञानस्य ज्ञानान्तरविरोधित्वात् । द्वित्वसामान्यतज्ज्ञानतत्सम्बन्धेभ्यो द्वित्वगुणबुद्धेरुत्पद्यमानतेति । द्वित्वसामान्याद्, द्वित्वसामान्यज्ञानाद् द्वित्वसामान्यगुणसम्बन्धाद् द्वित्वगुणबुद्धेरुत्पद्यमानता उत्पत्तिकारणसान्निध्यम् इत्येषामेकः कालः ।

**द्वित्वविनाशप्रकारः**

**तत इदानीमपेक्षाबुद्धिविनाशाद् द्वित्वगुणस्य विनश्यत्ता, द्वित्वगुणबुद्धितः सामान्यबुद्धेर्विनश्यत्ता, द्वित्वगुणतज्ज्ञानतत्सम्बन्धेभ्यो द्वेद्रव्ये इति द्रव्यबुद्धेरुत्पद्यमानतेत्येकः कालः ।**

तत इदानीमपेक्षाबुद्धेर्विनाशः । तद्विनाशाद् द्वित्वगुणस्य विनश्यत्ता द्वित्वगुणबुद्धेरुत्पादस्तत्सामान्यबुद्धेरपि विनश्यत्ता । *द्वित्वगुणतज्ज्ञानतत्सम्बन्धेभ्यः* इति । द्वित्वगुणश्च तज्ज्ञानञ्च तत्सम्बन्धश्चेति तथोक्तास्तेभ्यो निमित्तेभ्यः 'द्वे द्रव्ये' इति द्रव्यबुद्धेरुत्पद्यमानतेत्येकः कालः ।

**तदनन्तरं 'द्वे द्रव्ये' इति ज्ञानोत्पादः, द्वित्वस्य विनाशः, द्वित्वगुणबुद्धेर्विनश्यत्ता, द्रव्यज्ञानात् संस्कारस्योत्पद्यमानतेत्येकः कालः ।**

तदनन्तरं द्रव्यज्ञानस्योत्पादः, तस्माद् द्वित्वगुणबुद्धेर्विनश्यत्ता, सामान्यबुद्धेर्विनाशोऽपेक्षाबुद्धिविनाशाद् गुणस्य विनाशः, संस्कारस्योत्पद्यमानतेत्येषामेकः कालः ।

**तदनन्तरं द्रव्य [सामान्यात् ? ज्ञानाद्] द्वित्वगुणबुद्धेर्विनाशः, द्रव्यबुद्धेरपि संस्कारादिति ।**

ततः संस्कारोत्पादे सति द्रव्यबुद्धेः (विनश्यत्ता ?) गुणबुद्धेर्विनाशः, ततो द्रव्यबुद्धेरपि संस्काराद् विनाश इति ।

ननु सर्वमेतदसम्बद्धम्, संख्यासद्भावे प्रमाणाभावात् । अथैकं द्वे त्रीणि इत्यादिव्यवहारः प्रमाणम् । तन्न । अस्य कल्पनाज्ञानत्वात् । न च कल्पनाज्ञानमर्थव्यवस्थापनायालम्, तदभावेऽपि भावात् । तथाहि, निमित्तनिर्विकल्पकज्ञानक्रमेण स्मरणानन्तरं सविकल्पकं ज्ञानमुत्पद्यते, न चार्थस्यावस्थानम्, क्षणिकत्वाद् इति निर्विषयत्वम् ।

बाधकोपपत्तेश्च । तथा ह्युत्पद्यमानं द्वित्वादि न द्रव्योत्पत्तेः पूर्वमुत्पद्यते, तदभावात् । न समकालम्, कार्यकारणभावानुपपत्तिप्रसङ्गात् । अथोत्तरकालम् ? तत्रापि किं तत् स्वभावाद् विपरीताद् वेति । तत्स्वाभाव्ये किं द्वित्वादिना, द्रव्यस्यैव तत्स्वरूपत्वात् । विपर्यये तु, कथं तत्स्वभावात् तस्योत्पत्तिः, एकस्माद् बहुभ्यश्च द्वित्वोत्पत्तिप्रसङ्गात्, तत्स्वभावतायाः सर्वत्राविशेषात् ।

तथा वृत्त्यनुपपत्तेश्च । द्वित्वमनेकस्मिन् वर्तमानमेकदेशेन सर्वात्मना वा वर्तते ? नैकदेशेन, तदभावात् । न सर्वात्मना, उभयवृत्तित्वाभावप्रसङ्गात् । न च येनैव स्वरूपेणैकवृत्तिस्तेनैव द्रव्यान्तरेऽपि, तयोरेकताप्रसङ्गाद् इति वृत्त्यनुपपत्तेरसत्त्वम् ।

तथोपलब्धिलक्षणप्राप्तस्य सर्वैरग्रहणात् । यदि हि द्वित्वादेः सत्त्वम्, उपलब्धिलक्षणप्राप्तत्वाद् रूपादिवत् सर्वपुरुषैर्गृह्येत, न तूपलभ्यते, तस्मान्नास्तीति ।

समानेन्द्रियग्राह्यत्वाच्च । येनेन्द्रियेण द्रव्यमुपलभ्यते तेनैव संख्यापीति न ततोऽर्थान्तरम् । भेदे तु रूपादीनामिव असमानेन्द्रियग्राह्यत्वमपि स्यात् ।

इतोऽप्यसत्त्वं देशभेदेनानुपलब्धेः, तदग्रहे तद्बुद्ध्यभावाच्च, तथा ग्रहणानुपपत्तेश्च । तथाहि, द्वित्वमनेकत्र वर्तमानं कथमिन्द्रियेण परिच्छिद्येत, युगपत् सन्निकर्षद्वयस्य मनसानधिष्ठितत्वात् । अथ चक्षुरधिष्ठीयते, तथाप्यनेकपदार्थग्रहणप्रसङ्गः, तस्य मनोऽधिष्ठितस्यानेकपदार्थैः सम्बन्धात् ।

यथा च संख्यासम्बन्धाद् द्रव्येष्वेकादिव्यवहारस्तथैकत्वादिगुणेष्वप्येकादिव्यवहारे निमित्तान्तरकल्पनायां तत्राप्येकादिव्यवहारस्य सम्भवादन-

वस्थाप्रसङ्गः । अथैकत्वादावेकादिव्यवहारस्तत्स्वरूपतया ? द्रव्येऽपि तथाभावप्रसङ्गः । अथैकत्वादिसामान्ये तत्सामान्यानुपपत्तेरेकादिव्यवहारः ? [तच्च] कल्पनाज्ञानमिति ।

तदेतत् सर्वमसाम्प्रतम् । एकादिव्यवहारस्य बाधकासम्भवेन प्रामाण्यात् । तथा ह्येकादिज्ञानमर्थान्वयव्यतिरेकानुविधानान्नीलादिज्ञानवदर्थजम् । न चार्थाधीनतया निर्विकल्पकज्ञानोत्पत्तिसमकालमेव तस्योत्पत्तिः, सङ्केतस्मरणस्य सहकारिणोऽभावात् । नापि स्मृतिजमेव, अर्थस्यापि तत्र व्यापारोपलब्धेः । न च स्मृतेरतिशयाधायकत्वमनतिशयनिवर्तकत्वं वा, किन्तु अर्थसद्भावे सति ज्ञानजनकत्वमेव ।

न चार्थस्येन्द्रियाणां वा अविचारकत्वात् प्रागिव पश्चादप्यजनकत्वमिति दूषणम् । तथा वृत्त्यनुपपत्तेः, देशभेदेनाग्रहणात्, तदग्रहे तद्बुद्ध्यभावाच्चेति, पूर्वमेवावयविसमर्थनावसरे प्रतिषेधात् ।

न चाबाध्यमानमपि एकादिज्ञानम् अप्रमाणमिति न्याय्यम्, नीलादिज्ञानस्याप्यप्रमाणताप्रसङ्गात् । अथ नीलं विना तज्ज्ञाने न स्यान्नीलाकारता ? तदेकत्वादिज्ञानेऽपि समानम् ।

अथैकत्वादिज्ञानं शब्दाकारम्, न चार्थे तद्रूपतास्तीति निर्विषयत्वम्, न । नीलज्ञानस्यापि शब्दाकारतया निर्विषयताप्रसङ्गात् ।

अथाद्यं नीलज्ञानं निर्विकल्पकमर्थजम्, उत्तरन्तु सविकल्पकमनेकक्षणव्यवधानाद् अर्थापायेऽप्युत्पद्यते, अर्थस्य क्षणिकत्वाच्छब्दाकारातायाश्च तत्रासम्भवादिति निर्विषयत्वमिष्यत एव ।

तदसत् । क्षणिकत्वस्य पूर्वमेव प्रतिषेधात् । निर्विकल्पकज्ञानोत्पत्ताविवार्थस्य सविकल्पकज्ञानोत्पत्तावन्वयव्यतिरेकाभ्यामिन्द्रियेण सङ्केतस्मरणेन च सहकृतस्य व्यापारोपलब्धेः । तथाहि, इदन्तया ज्ञानोत्पत्तेस्तत्रेन्द्रियस्य व्यापारो निश्चीयते, अङ्गुल्या व्यपदिश्यमानत्वाद् अर्थस्य चेति । अन्यथा हीन्द्रियार्थयोरेकादिज्ञानोत्पत्तौ व्यापारमन्तरेण इदन्तयोपलब्धिरङ्गुल्यादिना च व्यपदेशो न स्यात् । अथेन्द्रियज्ञानं मनोविज्ञानक्रमेण

सविकल्पकज्ञानोत्पत्तौ कारणमिति, इदन्तयोपलब्धिरङ्गुल्यादिना व्यपदेशो नार्थजाविति चेत्, न । एतस्मिन् क्रमे प्रमाणाभावात् ।

अथ सङ्कल्पात् सद्भावसिद्धेरन्यथा एकादिव्यवहारो न स्यादित्येषा कल्पना क्रियते, तदसत्, वृत्तिविकल्पादेर्बाधकस्य पूर्वमेव प्रतिषेधात् । संख्यासद्भावसिद्धावेकादिव्यवहारस्य साक्षादर्थजत्वोपपत्तेः ।

शब्दाकारता तु सविकल्पकज्ञाने न सम्भवत्येव, साकारवाद प्रतिषेधस्य वक्ष्यमाणत्वात् । केवलन्तु स्मृतिजनितत्वात् सविकल्पकं ज्ञानं शब्दोल्लेखेनोत्पद्यते, निर्विकल्पकन्तु उल्लेखशून्यम्, सङ्केतस्मृतेरव्यापारात् ।

न च वासनाप्रभवत्वम्, वासनायाः पूर्वमेव प्रतिषेधात् । तथाहि, बोधव्यतिरेकेणान्या वासना न सम्भवतीत्युक्तमेव अवयविसमर्थनावसरे । या तु वैशेषिकोपगता स्मृत्यनुमेया वासना सा न कारणमेकादिव्यवहारे, तस्याः परोक्षकारणतया स्मृतिविलक्षणत्वात् । तथाहि, एकादिज्ञानम् अपरोक्षम् इन्द्रियव्यापारेण इदन्तयोत्पद्यते, न च स्मृतेरेतद्रूप[त्व]मस्तीति, न वासनाप्रभवम् । तथा इत्थम्भूतवासनाप्रभवत्वेऽपि परम्परयार्थव्यवस्थापकत्वम्, अर्थानुभवपूर्वकत्वाद् वासनायाः । या तु एकत्वादिशब्देभ्यो विकल्पाद् वासना सापि अर्थं व्यवस्थापयत्येव, शब्दस्यानुभवपूर्वकत्वेनाभ्युपगमात्, 'दृष्टे दृष्टवादित्वम्' इत्यनेन ।

यत्तु उत्पत्तिविकल्पनाद् एकत्वादेरसत्वमित्युक्तम्, तदसत्, उत्तरकालं तदुत्पत्त्यभ्युपगमात् । अथ किं तत् स्वभावाद् विपरीताद् वेत्युक्तम्, तत्र यदि तत्स्वाभाव्यं तदुत्पादनसामर्थ्यं विवक्षितम्, तदिष्यत एव । अथैकत्वाद्याश्रयत्वं तन्नास्ति, उत्पत्तेः पूर्वं तदभावात् । सिद्धे च संख्यासद्भावे प्रमाणतस्तस्याः कार्यद्रव्ये कृतकत्वाद् अवश्यमुत्पत्तिकारणं वाच्यम् । तत्र च एकत्वद्वित्वाद्याश्रयस्य तज्जनकत्वे तदभावः स्यात्, दृष्टा चोत्पत्तिः, तस्मात् द्रव्यमितरकारकोपचितम् तेषां कारणमिति उत्पत्तिविकल्पानुपपत्तिः ।

यच्चेदम्, उपलब्धिलक्षणप्राप्तस्यानुपलब्धेर्द्वित्वादेरसत्वमिति, तन्न, असिद्धत्वात् । तथा च यदीयया अपेक्षाबुद्ध्या सम्पादितं द्वित्वादि तस्यैवोप-

लब्धिलक्षणप्राप्तम्, न पुरुषान्तरस्य, तस्यैव तदुपलम्भात् । यत्रोपलम्भस्तत्रैव रूपिद्रव्ये समवायिकारणत्वमिष्टं न तदभावेऽपीति । तस्मान्न सकलपुरुषापेक्षया तदुपलब्धिलक्षणप्राप्तमित्यसिद्धो हेतुः ।

यच्चेदम्, एकत्वादेर्न द्रव्यव्यतिरेकेणास्तित्वं समानेन्द्रियग्राह्यत्वादिति । तत्र प्रतिज्ञावाक्ये पदयोर्व्याघातः, यथा इदञ्च नास्ति चेति । न चैकत्वादेः पक्षीकरणं युक्तम्, अप्रसिद्धत्वात् । प्रसिद्धञ्च पक्षीक्रियमाणं दृष्टं शब्दादि, न च परस्यैकत्वादि प्रसिद्धमिति ।

अथ परव्याप्त्या परस्यानिष्टापादनं प्रसङ्गसाधनमिति चेत्, तत्र यदि प्रमाणपूर्विका परप्रसिद्धिस्तयैव बाध्यमानत्वादनुत्थानं विपरीतानुमानस्य । अथाप्रमाणपूर्विका, तर्हि प्रमाणं विना प्रमेयस्याप्रसिद्धेरेक[त्वा]दीनां पक्षीकरणमयुक्तम् ।

तथा समानेन्द्रियग्राह्यत्वादिति । येनेन्द्रियेण द्रव्यमुपलभ्यते तेनैव संख्यापीति साधनस्य रूपादिभेदैरनैकान्तिकत्वम्। तथाहि, येनैवेन्द्रियेण शुक्लरूपस्य ग्रहणंतेनैवपीतादेः, न च तस्य तस्माद् भेदोऽसत्त्वं वेति । न च परस्य द्रव्यं प्रसिद्धमिति कथं तस्मादभेदः साध्यते ? अथ रूपमेव द्रव्यम् ? न तर्हि समानेन्द्रियग्राह्यत्वम् रूपस्यैकेन्द्रियग्राह्यत्वात्, संख्यायास्तु द्वीन्द्रियपरिच्छेद्यत्वादिति ।

अथ रूपादिसमुदायो द्रव्यम्, तथापि समानेन्द्रियग्राह्यत्वमसिद्धम्, रूपादेः प्रतिनियतेन्द्रियग्राह्यत्वात् । न च रूपादीनां प्रतिनियतेन्द्रियग्राह्यत्वाद् भेदः, शुक्लादिभेदानामेकताप्रसङ्गात् । किं तर्हि ? प्रतिभासभेदात्, स चेहाप्यस्त्येव । तथा ह्येकत्र द्रव्यप्रतिभासोऽन्यत्र चैकत्वादिप्रतिभास इति । अथ संख्याद्रव्ययोः प्रत्यक्षेण भेदप्रसिद्धेरेकतासाधनं प्रत्यक्षेण बाध्यमानत्वात् कालात्ययापदिष्टं भवतीति ।

यच्चेदम्, उत्पन्नस्य द्वित्वादेर्ग्रहणानुपपत्तेरसत्त्वम्, तदसत्, इन्द्रियव्यापारेणास्य द्वित्वादेरपरोक्षस्य दृष्टत्वात् । न च मनसानधिष्ठितस्येन्द्रियस्य परिच्छेदकत्वं युगपज्ज्ञानोत्पत्तिप्रसङ्गात् । अतश्चक्षुर्मनसाधिष्ठीयते । न सम्बन्धस्तेषाम्, अणुपरिमाणसम्बन्धितया न युगपदधिष्ठायकं मन इति द्वित्वादेरग्रहणमेव स्यात् । अस्ति च ग्रहणमतश्चक्षुरेव मनसाधिष्ठीयते ।

नन्वेवमप्यनेकपदार्थसम्बन्धाद् युगपदनेकज्ञानोत्पादकं स्यात् ? न। करणस्यैकप्रत्ययनिर्वृत्तौ सामर्थ्यात्। तथा ह्येकं करणमेकस्मिन् कालेऽनेकां क्रियां न करोतीति, तस्माद् युगपत् प्रकाशनमेव घटादीनां न ग्रहणानीत्युक्तपूर्वम्।

यच्चेदम्, एकादिव्यवहारो गुणान्तरात् स्वभावाद् वेत्युक्तम्, तत्रैकत्वसामान्यवशादिति ब्रूमः। तथाहि, द्रव्ये गुणसम्बन्धाद् एकादिव्यवहारो गुणे च सामान्यसम्बन्धाद् सामान्येऽपि गुणसम्बन्धात्। न च ग्रहणपरम्परा, विशेषणज्ञानस्य नियमेन ज्ञानपूर्वकत्वानभ्युपगमात्। अथ संयुक्तसमवेतसमवायाद् एकत्वसामान्ये ज्ञानमुत्पद्यते, विशेषणत्वादित्युक्तम्। अनेकगुणविषयस्य विशेष्यज्ञानस्यैवासंवेदनात्। न। द्वित्वस्योत्पत्त्यन्यथानुपपत्त्या तत्सद्भावसिद्धेः। तथाहि, यदि कारणगुणपूर्वप्रक्रमेण रूपादिवदुत्पद्यते द्वित्वं प्रथमाक्षसन्निपातवेलायामेव ग्रहणं स्यात्, चिरोत्पन्नत्वात्, गणनावैयर्थ्यञ्च। न चैतत्। तस्मादनेकगुणविषयस्य ज्ञानस्यात्मवर्तिनोऽपि द्वित्वोत्पत्तौ कारणत्वं निश्चीयते, तद्विनाशाच्च विनाशः। अन्यथा हि समवाय्यसमवायिकारणयोर्विनाशाद् विनाशाभ्युपगमे तयोरनेककालमवस्थानात् स्थायित्वमेव स्यात्, क्वचिन्नित्यत्वञ्च। तयोरविनाशादन्यस्य च विरोधिगुणस्यासम्भवात्। तस्मान्निमित्तकारणादेव विनाशः कल्प्यते।

न चैवं घटादेर्निमित्तकारणविनाशाद् विनाशप्रसङ्गः, अदर्शनात्। अत्र तु समवाय्यसमवायिकारणयोरवस्थानेऽपि द्वित्वादेर्विनाशस्य दृष्टत्वाद् अपेक्षाबुद्धिविनाशाद् विनाशः कल्प्यते। अन्यथा हि रूपादिवदवस्थाने प्रथमाक्षसन्निपातकाल एव ग्रहणं स्यादित्युक्तम्। अथावस्थितस्यापि द्वित्वादेर्व्यञ्जकाभावात् [अनुपलम्भः], उपलम्भस्तु इदानीमुत्पन्नस्यापि घटत इत्यपेक्षाबुद्ध्यादेर्जनकत्वमेव न्याय्यम्। तस्माद् द्वित्वादिव्यवहारोत्तरकालं तदभावस्य संवेदनात् तदुत्पत्तौ कारणान्तरस्यासम्भवे सति अपेक्षाबुद्धिविनाशस्य कारणत्वमुक्तम्।

अथ पूर्वं द्वित्वसामान्यज्ञानमनन्तरं गुणज्ञानं द्रव्यज्ञानञ्चेति कल्पनायां किं प्रमाणम् ? विशेषणत्वमिति चेत्, न। विशेषणेऽपि विशेषणान्तरकल्पनायामनवस्थाप्रसङ्गात्। तथाहि 'द्वे द्रव्ये' इति द्रव्यज्ञानोत्पत्तौ गुणस्य विशेषण-

त्वाद् युक्तमादौ तज्ज्ञानं गुणस्य च विशेषणत्वान्न तत्सामान्यज्ञानं युक्तम् । अभ्युपगमे वा, तस्याप्यन्यद् विशेषणमित्यनवस्था स्यात् ? न । नियमानभ्युपगमात् । तथाहि, विशेषणेऽवश्यं विशेषणान्तरकल्पनेति नियमः प्रतिषिध्यतेऽनवस्थाभयात् । न पुनर्विशेषणे विशेषणमेव नास्तीति । विवक्षितञ्चैतद् भाष्यकर्त्तुः, द्रव्यविशेषणस्यापि गुणस्य सामान्यविशेषणाभिधानादिति ।

अथ संस्काराद् द्रव्यबुद्धेर्विनाश इत्यत्र किं प्रमाणम् ? कार्यस्याकस्मिकस्यानुपलब्धेः, द्रव्यज्ञानविनाशस्य प्रत्यक्षेण संवेदनात् संस्कारस्य कारणत्वं निश्चीयते । तस्य च स्मृत्या सद्भावसिद्धिरिति वक्ष्यामः ।

**त्रित्वाद्युत्पत्तिविनाशप्रकारः**

**एतेन त्रित्वाद्युत्पत्तिरपि व्याख्याता । एकत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो त्रित्वादिनिष्पत्तिरपेक्षाबुद्धिविनाशाद् विनाश इति ।**

तदेवं द्वित्वस्योत्पत्तिविनाशकारणे प्रज्ञापिते सति *एतेन त्रित्वाद्युत्पत्तिर्व्याख्याता* इत्यतिदेशं करोति । यथा हि, द्वित्वमेकत्वाभ्यामनेकबुद्धिविषयसहिताभ्यामारभ्यते तथा त्रित्वादेरप्येकत्वेभ्योऽनेकबुद्धिविषयसहितेभ्यो निष्पत्तिरिति ।

(१) उत्पन्ने च त्रित्वादौ तत्सामान्यज्ञानम्, ततोऽपेक्षाबुद्धेर्विनश्यत्ता, सामान्यतज्ज्ञानतत्सम्बन्धेभ्यो गुणबुद्धेरुत्पद्यमानतेत्येकः कालः ।

(२) ततस्त्रित्वादिगुणबुद्धेरुत्पादः, गुणतज्ज्ञानतत्सम्बन्धेभ्यो द्रव्यबुद्धेरुत्पद्यमानता, अपेक्षाबुद्धेर्विनाशः, सामान्यज्ञानस्य विनश्यत्ता, गुणस्य विनश्यत्तेत्येषामेकः कालः ।

(३) ततो द्रव्यज्ञानस्योत्पादः, संस्कारस्योत्पद्यमानता, गुणज्ञानस्य विनश्यत्ता, सामान्यज्ञानस्य विनाशः, अपेक्षाबुद्धिविनाशाच्च गुणस्यापि नाश इत्येकः कालः ।

(४) ततः संस्काराद् द्रव्यज्ञानस्यापीत्यतिदेशार्थः ।

आदिपदेन तु शतसंख्यादेरवरोधस्तत्र च द्वित्वोत्पत्त्यतिदेशो न सम्भवत्येव । तथाहि, द्रव्यशतस्य युगपदिन्द्रियेण सम्बन्धाभावात् तद्गतैकगुणा-

नामग्रहणेऽपेक्षाकारणाभावात् कथं शतसंख्योत्पत्तिरिति । न चेन्द्रियेणैकत्व-सामान्यस्य एकस्मिन् द्रव्ये संयुक्तसमवेतसमवायलक्षणस्य सम्बन्धस्योत्पत्ते-स्तस्यैकताया द्रव्यान्तरगुणेष्वपि सद्भावात् तदाकृष्टनामेकैकगुणानां युगपद्-ग्रहणाच्छतसंख्योत्पत्तिरिति वाच्यम् । सर्वत्र तथाभावेन शतसंख्याद्युत्पत्ति-प्रसङ्गात् । तथाहि, इन्द्रियस्यैकत्वसामान्येन संयुक्तसमवेतसमवायलक्षणस्य सम्बन्धस्याविशेषात् तदुपग्रहादेकैकगुणानां ग्रहणाभ्युपगमे सर्वस्मिन् द्रव्ये शतसंख्याद्युत्पत्तिः स्यात् । न चैतत् । तस्मादपेक्षाकारणाभावादनुत्पत्ति-रिति । न चापेक्षाबुद्धिं विनैवोत्पत्तिः, गणनावैयर्थ्यप्रसङ्गादित्युक्तन्यायात् ।

तदेतत् सर्वमसत्, संख्याव्यवहारस्य वास्तवत्वात् । शतसंख्यादिसद्भाव-सिद्धौ तस्याः कृतकत्वाद् अवश्यमुत्पत्तिकारणं वाच्यमिति अन्यस्यासम्भवाद् विलक्षणैवापेक्षाबुद्धिः कल्प्यत इति ।

(१) तथा चैकस्मिन् एकगुणे ज्ञानोत्पत्तौ सत्यां संस्कारस्योत्पादे द्वितीयै-कगुणज्ञानस्योत्पद्यमानता, पूर्वज्ञानस्य विनश्यत्तेत्येकः कालः ।

(२) ततो द्वितीयैकगुणज्ञानस्योत्पादः, पूर्वगुणस्मरणस्योत्पद्यमानता, प्राक्तनसंस्कारसहकारिणा च ज्ञानेन संस्कारस्योत्पद्यमानता, प्राक्तनज्ञानस्य विनाश इत्येकः कालः ।

(३) ततः स्मरणस्योत्पादः, संस्कारस्योत्पादः, द्वितीयगुणज्ञानस्य विनश्यत्ता, स्मरणानुभवौ चापेक्षाबुद्धिः, ततो द्वित्वस्योत्पद्यमानतेत्येकः कालः ।

(४) ततो द्वित्वस्योत्पादात् तज्ज्ञानस्योत्पद्यमानता, द्वितीयैकगुण-ज्ञानस्यापि विनाश इत्येकः कालः ।

(५) ततो द्वित्वगुणज्ञानस्योत्पादः, द्रव्यज्ञानस्योत्पद्यमानता, स्मरणस्य विनश्यत्तेत्येकः कालः ।

(६) ततो द्रव्यज्ञानस्योत्पादः, गुणज्ञानस्य बिनश्यत्ता, स्मरणस्य विनाशः, तद्विनाशाद् द्वित्वस्य विनश्यत्ता, तृतीयैकगुणज्ञानस्योत्पद्यमानतेत्येकः कालः ।

(७) ततस्तृतीयैकगुणज्ञानस्योत्पादः, द्रव्यज्ञानस्य विनश्यत्ता, द्वित्व-गुणज्ञानस्य विनाशः, पूर्वैकगुणद्वितये स्मरणस्योत्पद्यमानता, पूर्वसंस्कार-

सचिवेन एकगुणज्ञानेन संस्कारान्तरस्योत्पद्यमानता, द्वित्वगुणस्य विनाश इत्येकः कालः ।

(८) ततः स्मरणस्योत्पादः, संस्कारस्योत्पादः, एकगुणज्ञानस्य विनश्यत्ता, स्मरणानुभवौ चापेक्षाबुद्धिः, ततस्त्रित्वगुणस्योत्पद्यमानता, द्रव्यज्ञानस्य विनाश इत्येकः कालः ।

(९) ततस्त्रित्वगुणस्योत्पादः, तज्ज्ञानस्योत्पद्यमानता, एकगुणज्ञानस्य विनाश इत्येकः कालः ।

(१०) ततस्त्रित्वगुणज्ञानस्योत्पादः, द्रव्यज्ञानस्योत्पद्यमानता, स्मरणस्य विनश्यत्तेत्येकः कालः ।

(११) ततो द्रव्यज्ञानस्योत्पादः, गुणज्ञानस्य विनश्यत्ता, स्मरणस्य विनाशः, तद्विनाशात् त्रित्वगुणस्य विनश्यत्ता, चतुर्थैकगुणज्ञानस्योत्पद्यमानतेत्येकः कालः ।

(१२) ततश्चतुर्थैकगुणज्ञानस्योत्पादः, द्रव्यज्ञानस्य विनश्यत्ता, गुणज्ञानस्य विनाशः, त्रित्वगुणविनाशः, संस्कारस्योत्पद्यमानतेत्ययं क्रमश्चतुष्ट्वादिष्वप्यूह्यस्तावद् यावदन्त्यद्रव्यैकगुणे ज्ञानं कल्पनया तत्संस्कारेण च स्मरणस्योत्पद्यमानतेति ।

(१३) ततः प्राक्तनाशेषैकगुणविषयस्मरणस्योत्पादः, अन्त्यद्रव्यैकगुणज्ञानस्य विनश्यत्ता, स्मरणानुभवौ चापेक्षाबुद्धिः, ततः शतसंख्याया उत्पद्यमानतेत्येकः कालः ।

(१४) ततः शतसंख्याया उत्पत्तिः, तज्ज्ञानस्योत्पद्यमानता, अन्त्यद्रव्यस्यैकगुणज्ञानस्य विनाश इत्येकः कालः ।

(१५) ततो गुणज्ञानस्योत्पादः, द्रव्यज्ञानस्योत्पद्यमानता स्मरणस्य विनश्यत्तेत्येकः कालः ।

(१६) तदनन्तरम् 'एतानि शतम्' इति द्रव्यज्ञानस्योत्पादः, गुणज्ञानस्य विनश्यत्ता, संस्कारस्योत्पद्यमानता, स्मरणस्य विनाशः, तदनन्तरं संस्काराद् द्रव्यज्ञानस्यापीति ।

अन्ये तु, एकस्मिन् एकगुणे ज्ञानं, तेन क्रियते संस्कारः, पुनर्द्वितीयैकगुणे ज्ञानम्, तेन प्राक्तनेन चान्यः संस्कार इत्येषा कल्पना तावद् यावदन्त्यगुणे ज्ञानम्, ततः कल्पनया तत्संस्कारस्याभिव्यक्तत्वाद् अशेषैकगुणविषयस्य स्मरणस्योत्पत्तिः, अनुभवस्य विनश्यत्ता इत्यपेक्षाबुद्धिः शतसंख्याजनिकेति मन्यन्ते । न चान्तराले द्वित्वाद्यनुभवस्यापि संवेदनादनुभवेन बाधेति वाच्यम्, कारणांशस्यैव कीर्तनात् । तथाहि, एक गुणानुभवजनितः संस्कारः स्मृतिद्वारेण शतसंख्योत्पत्तौ कारणम् । न चैवं द्वित्वाद्यनुभव इति तस्यानुपन्यासो नासत्त्वादिति ।

अथास्त्वेवमुत्पत्तिः शतसंख्यायाः, ग्रहणन्तु कथमिति चिन्त्यते । तथाहि, द्रव्यशतस्य युगपदिन्द्रियेण सम्बन्धाभावात् तद्वर्त्तिनी शतसंख्याप्यप्रत्यक्षेति, कथमेतानि शतमिति प्रत्ययः स्यात् ? अथान्त्यद्रव्येणेन्द्रियस्य संयोगात् तत्समवेता च शतसंख्योत्पन्नेति संयुक्तसमवायादुपलभ्यत एव । तदाकृष्टानि च पूर्वोपलब्धद्रव्याणीन्द्रियसंयोगाभावेऽपि विशेषणविशेष्यलक्षणेनैव सम्बन्धेन 'एतानि शतम्' इत्यपरोक्षज्ञानविषयाणि भवन्तीति ।

तर्हि सत्ताविशेषेणाकृष्टानामाकाशादीनामपि प्रत्यक्षता स्यात् ? न, अभिप्रायापरिज्ञानात् । तथाहि 'एतानि शतम्' इत्यपरोक्षज्ञानस्य दृष्टत्वादत्र कारणचिन्ता क्रियते । तत्र चान्यसम्बन्धस्यानुपलब्धेः शतसंख्याकृष्टानि विशेषणविशेष्यभावेणैव प्रत्यक्षाणि । न चैवमाकाशादीन्युपलब्धपूर्वाणि, न च तेष्वपरोक्षं विज्ञानमस्तीति नैवं कल्प्यते ।

न चाद्यद्रव्यस्येन्द्रियेण संयोगाच्छतसंख्योपलभ्यते, अन्त्यद्रव्ये समुत्पादात् । तथाहि, गणनाद्वारेण अन्त्यद्रव्यस्यैकगुणोपलम्भाद् उपलब्धैकगुणेषु द्रव्येषु समवेता शतसंख्योत्पद्यते तेन पूर्वेष्वेवेति तत्संयोगेऽप्यसम्भवाद् अग्रहणम् ।

न चात्रानुभवसहकारिणः संस्कारस्य संस्कारान्तरारम्भकत्वे घटाद्यनुभवजनितसंस्कारस्यापि अनुभवान्तरसहकारिणः संस्कारारम्भकत्वप्रसङ्गः, अदृष्टकारितत्वाद् वस्तुव्यवस्थायाः । तथाहि, शतसंख्याद्युपभोगप्रापकादृष्ट-

नियमाद् अत्रैव विशिष्टसंस्कारोत्पत्तिर्न घटादौ, तत्र हि कार्याभावादिति । कार्यसद्भावेन च कारणपरिकल्पना क्रियत इति । यत्रान्यथा असम्भवस्तत्रैव नियामकत्वमदृष्टस्य न पुनर्दृष्टकारणप्रत्याख्यानमिति । तस्माददृष्टसद्भावेऽपि गणनोपलम्भाद् अपेक्षाबुद्धेः कारणत्वं कल्प्यते । अन्यथा हि ईश्वरबुद्धेरदृष्टस्य एकगुणसहकारित्वेन शतसंख्याद्यारम्भकत्वे सर्वद्रव्येषु शतसंख्याद्युत्पत्तौ रूपादिवच्चिरोत्पन्नत्वाद् गणनामन्तरेणैवोपलम्भः स्यात् । न चास्ति ।

अथाभिव्यञ्जकाभावादनुपलम्भ इति चेन्न, [तत्] सद्भावे प्रमाणाभावादित्युक्तोत्तरत्वात् ।

न चान्यदीयबुद्धिसम्पादितानि अन्यस्य प्रत्यक्षोपलब्धानीति ईश्वरसम्पादितासु अस्मदादीनां प्रत्यक्षता न स्यात् । तस्मादुक्तन्यायेनोत्पत्तिर्ग्रहणञ्चेत्यलमति विस्तरेण ।

**क्वचिदाश्रयविनाशादिति । कथम् ? यदैकत्वाधारावयवे कर्मोत्पद्यते तदैवैकत्वसामान्यज्ञानमुत्पद्यते, कर्मणा चावयवान्तराद् विभागः क्रियते, अपेक्षाबुद्धेश्चोत्पत्तिः । अतो यस्मिन्नेव काले विभागात् संयोगविनाशस्तस्मिन्नेव काले द्वित्वमुत्पद्यते, संयोगविनाशाद् द्रव्यविनाशः सामान्यबुद्धेश्चोत्पत्तिः । ततो यस्मिन्नेव काले सामान्यज्ञानापेक्षाबुद्धेर्विनाशस्तस्मिन्नेव काले आश्रयविनाशाद् द्वित्वविनाश इति ।**

विनाशमाह न परमपेक्षाबुद्धिविनाशात् *क्वचिदाश्रयविनाशादिति* । *कथम् ?* इत्यव्युत्पन्नप्रश्नः । तत्र द्वित्वस्याश्रयविनाशेन विनाशाभिधानात् तत्समानतया अन्यत्रापि परिज्ञानं भविष्यतीति मन्यमानो द्वित्वस्यैव विनाशमाह *[यदैकत्वाधारावयवे]कर्मोत्पद्यते* । विभागस्योत्पद्यमानता, तदैवैकत्वसामान्ये ज्ञानमुत्पद्यते, अपेक्षाबुद्धेरुत्पद्यमानता, ततो विभागस्योत्पादः, द्रव्यारम्भकसंयोगस्य विनश्यत्ता, अपेक्षाबुद्धेरुत्पादः, द्वित्वस्योत्पद्यमानता, एकत्वसामान्यज्ञानस्य विनश्यत्ता, तदनन्तरं संयोगस्य विनाशः, एकत्वसामान्यज्ञानस्य विनश्यत्ता, द्रव्यस्य विनश्यत्ता [द्रव्य ? द्वित्व] स्योत्पादः, तत्सामान्यज्ञानस्योत्पद्यमानतेत्येषामेकः कालः ।

ततः सामान्यज्ञानस्योत्पादः, अपेक्षाबुद्धेर्विनश्यत्ता, द्रव्यस्य विनाशः, गुणस्य विनश्यत्ता, ततो द्रव्यविनाशाद् गुणस्य विनाशः, सामान्यज्ञानाच्चापेक्षाबुद्धेरिति। न च अपेक्षाबुद्धिविनाशकार्यो गुणविनाशः समकालत्वादिति द्रव्यविनाशस्यैव कारणत्वं पूर्वकालत्वात्।

यदा तु अपेक्षाबुद्धिसमकालमेकत्वाधारावयवे कर्म चिन्त्यते तदा उभयविनाशादपि गुणस्य विनाशः सम्भवतीति ज्ञेयम्।

**शोभनमेतद्विधानम् वध्यघातकपक्षे। सहानवस्थानलक्षणे तु विरोधे द्रव्यज्ञानानुत्पत्तिप्रसङ्गः। कथम्? गुणबुद्धिसमकालमपेक्षाबुद्धिविनाशाद् द्वित्वविनाशे तदपेक्षस्य द्वे द्रव्ये इति द्रव्यज्ञानस्यानुत्पत्तिप्रसङ्ग इति।**

*शोभनमेतद्विधानम्* इत्यादिना परपक्षप्रतिषेधद्वारेण स्वपक्षमुपसंहरति। शोभनं युक्तमेतद् द्वित्वाद्युत्पत्तिविधानम्। कस्मिन् पक्षे? इत्याह *वध्यघातकपक्षे* यदा हि एकस्य ज्ञानस्योत्पादोऽन्यस्य विनश्यत्ता।

*सहानवस्थानलक्षणे तु विरोधे द्रव्यज्ञानानुत्पत्तिप्रसङ्गः* इत्यशोभनम्। तथाहि, सहानवस्थानलक्षणे विरोधे द्वित्वसामान्यज्ञानसमकालम् अपेक्षाबुद्धिविनाशात् गुणबुद्धिसमकालं द्वित्वविनाशे तदपेक्षस्य 'द्वे द्रव्ये' इतिज्ञानस्यानुत्पत्तिप्रसङ्गः, तथा निर्हेतुकता च विनाशस्य। यदैव द्वित्वसामान्यज्ञानस्योत्पादस्तदैव अपेक्षाबुद्धेर्विनाश इत्येककालत्वान्न सामान्यज्ञानकार्योऽपेक्षाबुद्धिविनाशः। न चान्यत् कारणमस्तीति निर्हेतुकत्वं प्रसज्येत। न चैतत् सम्भवतीत्युक्तमेव।

**लैङ्गिकवज्ज्ञानमात्रादिति चेत्, स्यान्मतम्। यथा 'अभूतं भूतस्य' इत्यत्र लिङ्गाभावेऽपि ज्ञानमात्रादनुमानम् तथा गुणविनाशेऽपि गुणबुद्धिमात्राद् 'द्वे द्रव्ये' इति प्रत्ययः स्यादिति।**

अथ यद्यपि गुणबुद्धिसमकालमपेक्षाबुद्धिविनाशात् गुणस्य विनाशः, तथापि लैङ्गिकज्ञानवज्ज्ञानमात्राद् 'द्वे द्रव्ये' इतिज्ञानं भविष्यतीति परमतमाशङ्कते *लैङ्गिकवज्ज्ञानमात्रादिति चेत्* मतमभिप्रेतं स्यात्। यथा

अभूतमविद्यमानं लिङ्गं भूतस्य विद्यमानस्य लिङ्गिनो गमकमित्यत्र सूत्रे लिङ्गाभावेऽपि ज्ञानमात्रादनुमानमिष्टम् ।

तथा हि, ज्ञानेन ज्ञानमनुमीयत इति ज्ञानस्य लिङ्गत्वादवश्यं ग्रहणम्, ततस्तस्य विनश्यत्ता, अविनाभावसम्बन्धस्मरणस्योत्पद्यमानता, तदनन्तरमविनाभावसम्बन्धस्मरणस्योत्पादः, लिङ्गभूतस्य ज्ञानस्य विनाशः, तज्ज्ञानस्य विनश्यत्ता, परामर्शज्ञानस्योत्पद्यमानता, ततः परामर्शज्ञानस्योत्पादः, अविनाभावसम्बन्धस्मरणस्य विनश्यत्ता, लिङ्गज्ञानस्यापि विनाश इति निर्विषयात् परामर्शज्ञानमात्रादेव ज्ञातरि प्रतिपत्तिर्भवतीति दृष्टम् । तथा गुणविनाशे गुणज्ञानमात्राद् द्रव्यप्रत्ययः स्यादिति ।

अन्ये तु, यथा अभूतमविद्यमानं वर्षकर्म भूतस्य विद्यमानस्य वाय्वभ्रसंयोगस्य लिङ्गम्, तथा गुणविनाशेऽपि तज्ज्ञानमात्राद् द्रव्यज्ञानमिति मन्यन्ते । न चैतद् युक्तम् । तथाहि न अविद्यमानं वर्षकर्म विद्यमानस्य वाय्वभ्रसंयोगस्य सद्भावे लिङ्गम् । किं तर्हि ? वर्षकर्मानुत्पादो व्यभिचारी । स च स्वरूपेणास्त्येवेति कथमविद्यमानम् ? अथ भावरूपतया तस्यासत्त्वम्, तर्हि भावस्याप्यभावरूपेणासत्त्वमिति सर्वस्यासत्त्वमेव स्यात् । तस्माद् वर्षकर्मानुत्पादो विद्यमान एव लिङ्गमित्युदाहरणान्तरमेव न्याय्यम् ।

**न विशेष्यज्ञानत्वात् । न हि विशेष्यज्ञानं सारूप्याद् विशेषणसम्बन्धमन्तरेण भवितुमर्हति । तथाह सूत्रकारः 'समवायिनः श्वैत्याच्छ्वैत्यबुद्धेः श्वेते बुद्धिस्ते कार्यकारणभूते' इति ।**

प्रतिसमाधानमाह यदुक्तं लैङ्गिकज्ञानवत् द्वे द्रव्ये इतिज्ञानं भविष्यतीत्येतत् * न विशेष्यज्ञानत्वात् * तथाहि, द्वित्वानुरागेणोत्पद्यमानत्वात् 'द्वे द्रव्ये' इतिविशेष्यज्ञानमतो विद्यमानस्यैव गुणस्यात्र व्यापारः कल्पनीयः । तथाहि, यस्मान्न विशेष्यज्ञानं * विशेषणसम्बन्धमन्तरेण * विशेषणसम्बन्धं विना * भवितुमर्हति * इति तदुत्पत्तौ विशेषणतज्ज्ञानतत्सम्बन्धानां कारणत्वम् । अन्यथा हि सकलकारणानां विशेष्यज्ञानोत्पत्तौ (विशेष ?) व्यापाराविशेषेण नियतस्यैव विशेषणत्वं न स्यात् । अतो विशेषणतज्ज्ञानतत्सम्बन्धानां कारणत्वम् ।

तथा चाह सूत्रकारः 'समवायिनः श्वैत्याच्छ्वैत्यबुद्धेः श्वेते बुद्धिस्ते कार्यकारणभूते' ( वै० सू० ८।१।८ ) इत्यनेन सूत्रकारस्याप्ययमर्थोऽभिप्रेत इति दर्शयति । तथाहि श्वेतं द्रव्यम् तस्य भावः श्वैत्यम्, श्वेतगुणस्तस्मात् । किं विशिष्टात् ? समवायिनः समवायेन सम्बन्धात् । श्वैत्यबुद्धेरिति श्वेतगुणबुद्धेः । एतस्मात् कारणत्रयात् श्वेतबुद्धिर्विशेष्यज्ञानं 'श्वेतं द्रव्यम्' उत्पद्यते । ते पुनर्विशेषणविशेष्यबुद्धी कार्यकारणभूते कार्यकारणस्वभावे इति ।

**न तु लैङ्गिकं ज्ञानमभेदेनोत्पद्यत इति । तस्माद् विषमोऽयमुपन्यासः ।**

न च लैङ्गिकं ज्ञानं लिङ्गानुरक्तमिति लिङ्गाभावेऽप्युत्पद्यत इत्याह * न तु लैङ्गिकं ज्ञानमभेदेन * लिङ्गानुरागेणोत्पद्यते । * तस्माद् विषमोऽयमुपन्यासः * इति । योऽयं लैङ्गिकज्ञानवद् 'द्वे द्रव्ये' इति भविष्यतीत्युपन्यासः स विषमः समो न भवतीति । तथा हि, विशेष्यज्ञाने विशेषणानुराग इति, लैङ्गिके तु अनुरागाभाव इति वैषम्यम् ।

यद् वा विषमोऽयमुपन्यासः, उपन्यस्यते साध्यसाधनयोरस्मिन् व्याप्तिरित्युपन्यासः । लैङ्गिकवदिति दृष्टान्तः । स च विषमः, लिङ्गानुरागशून्यतया तस्य अविशेष्यज्ञानत्वादिति ।

अन्ये तु ते विशेषणतज्ज्ञाने कार्यस्य विशेष्यज्ञानस्य कारणभूते । तस्माद् गुणं विना न द्रव्यज्ञानमिति मन्यन्ते ।

ते च विशेषणविशेष्यबुद्धी कार्यकारणभूते । न पुनः सर्वं विज्ञानं तथाभूतम्, प्रमाणाभावात् ।

एतेन सङ्कलनाज्ञानं निरस्तम्, विशेषणविशेष्यज्ञानव्यतिरेकेण ज्ञानान्तरे प्रमाणाभावादित्यलम् ।

**न । आशूत्पत्तेः, यथा शब्दवदाकाशमिति । अत्र त्रीणि ज्ञानान्याशूत्पद्यन्ते तथा द्वित्वादिज्ञानोत्पत्तावित्यदोषः ।**

ननु द्वित्वोत्पत्तेः प्राक् ज्ञानद्वयम्, एकत्वसामान्यज्ञानमपेक्षाज्ञानञ्च; उत्पन्ने तु द्वित्वे तत्सामान्यज्ञानम्, गुणज्ञानम्, द्रव्यज्ञानञ्चेति ज्ञानपञ्चकं यदि क्रमेणोत्पद्यते स कस्मान्नोपलभ्यते ? अनुपलम्भान्नास्तीति परः, तन्नि-

षेधार्थमाह *न आशूत्पत्तेः* इति। यदुक्तं क्रमस्यासत्त्वमित्येतन्न, आशुभावित्वेन विद्यमानस्यापि क्रमस्यासंवेदनात्।

अथ आशूत्पत्तेः क्रमस्याग्रहणं कस्मिन्नुपलब्धमित्याह *यथा शब्दवदाकाशमिति* इत्यत्र शब्दज्ञानमाकाशज्ञानं शब्दाकाशसम्बन्धज्ञानञ्चेति त्रीणि ज्ञानान्याशूत्पद्यन्ते इति क्रमस्याग्रहणम्, तथा द्वित्वादिज्ञानोत्पत्तौ आशुभावित्वेनैव क्रमाग्रहणमित्यदोषः।

न च ज्ञानानां सहानवस्थानलक्षण एव विरोधे ज्ञानानामाशुभावित्वेनोत्पत्तेः, अविनष्टे हि गुणे द्रव्यज्ञानं भविष्यतीति प्रतिसमाधानमेतदिति वाच्यम्, शीघ्रं कारणसद्भावेन कार्यस्यापि तथाभावात्। अवश्यं गुणबुद्धिसमकालं गुणविनाशे तदायत्तस्य द्रव्यज्ञानस्यानुत्पत्तिरिति दूषणस्याप्यावृत्तेः। यदि ज्ञानयोः सहाविरोधेनावस्थानं नास्तीति सहानवस्थानं विवक्षितमविवाद एव।

**वध्यघातकपक्षेऽपि समानो दोष इति चेत्, स्यान्मतम्। ननु वध्यघातकपक्षेऽपि तर्हि द्रव्यज्ञानानुत्पत्तिप्रसङ्गः। कथम्? द्वित्वसामान्यबुद्धिसमकालं संस्कारादपेक्षाबुद्धिविनाशादिति। न। समूहज्ञानस्य संस्कारहेतुत्वात्। समूहज्ञानमेव संस्कारकारणं नालोचनज्ञानमित्यदोषः।**

अथेदानीं सहानवस्थानलक्षणविरोधाद् वध्यघातकपक्षेऽपि समानं दूषणमिति परमतमाशङ्कमान इदमाह *वध्यघातकपक्षेऽपि समानो दोष इति चेत्, स्यान्मतम्* अभिप्रेतमिति सङ्ग्रहवाक्यम्। अस्य तु विवरणं *वध्यघातकपक्षेऽपि तर्हि द्रव्यज्ञानानुत्पत्तिप्रसङ्गः* इति। तथाहि, यदि गुणबुद्धिसमकालं गुणविनाशे द्रव्यज्ञानानुत्पत्तिस्तर्हि वध्यघातकपक्षेऽपि तस्यानुत्पत्तिरेव कथम्? सामान्यबुद्धिसमकालं संस्कारादपेक्षाबुद्धिविनाशादिति।

यथा हि, अपेक्षाबुद्धिर्द्वित्वं जनयति एवं संस्कारमपीति। ततस्तस्या विनश्यत्ता, द्वित्वसामान्यज्ञानस्योत्पद्यमानता, ततो द्वित्वसामान्यज्ञानस्योत्पादः, गुणज्ञानस्योत्पद्यमानता, अपेक्षाबुद्धेर्विनाशः, गुणस्य विनश्यत्ता,

ततो गुणज्ञानस्योत्पादः, अपेक्षाबुद्धिविनाशाद् गुणस्य विनाश इति तदपेक्षत्वाद् द्रव्यज्ञानस्यानुत्पत्तिरेव । न । समूहज्ञानस्य संस्कारहेतुत्वाद् इति प्रतिसमाधानम् । तथाहि, यदुक्तम्, अपेक्षाबुद्धेः संस्काराद् विनाश इति, तन्न । समूहज्ञानस्य पट्वभ्यासादरप्रत्ययस्य संस्कारहेतुत्वादिति ।

सङ्ग्रहोक्तेर्विवरणमाह *समूहज्ञानमेव संस्कारकारणम्, न आलोचनज्ञानम्* अपेक्षाज्ञानमिति । तस्माददोषः । किमत्र प्रमाणमिति चेत्, स्मरणानुत्पत्तिर्द्रव्यज्ञानोत्पत्तिश्च । तथाहि, यत्र स्मरणं तत्रैव संस्कारकल्पना क्रियते, न चात्र तदस्तीति । अभ्युपगमे द्रव्यज्ञानमेव न स्यात् । तद् दृष्टम् । अतस्तदन्यथानुपपत्त्या अपेक्षाबुद्धेः संस्काराजनकत्वं निश्चीयते, प्रकारान्तराभावात् ।

**ज्ञानयौगपद्यप्रसङ्ग इति चेत्, स्यान्मतम् । ननु ज्ञानानां वध्यघातकविरोधे ज्ञानयौगपद्यप्रसङ्ग इति, न । अविनश्यतोरवस्थानप्रतिषेधात् । ज्ञानायौगपद्यवचनेन ज्ञानयोर्युगपदुत्पत्तिरविनश्यतोश्च युगपदवस्थानं प्रतिषिध्यते । न हि वध्यघातकविरोधे ज्ञानयोर्युगपदुत्पत्तिरविनश्यतोश्च युगवदवस्थानमस्तीति ।**

अथेदानीं वध्यघातकपक्षेऽपि पराशयमाशङ्कते *ज्ञानयौगपद्यप्रसङ्ग इति चेत् स्यान्मतम्* इति । सङ्ग्रहोक्तेर्विवरणम् *ननु ज्ञानानां वध्यघातकविरोधे ज्ञानयौगपद्यप्रसङ्ग* इति । तथा च यदि ज्ञानानां वध्यघातकलक्षणो विरोधस्तदा एकस्यावस्थाने द्वितीयस्योत्पादाज्ज्ञानयौगपद्यं प्रसज्यत इत्यनिष्टापादनम् ।

तन्नानिष्टम् । *अविनश्यतोरवस्थानप्रतिषेधात्* । तथाहि, "ज्ञानायौगपद्यवचनेन प्रयत्नायौगपद्याच्च प्रतिशरीरमेकं मनः" (वै० सू० ३।२।३) इति सूत्रेण युगपदुत्पत्तिः, अविनश्यतोश्च ज्ञानयोः परस्पराविरोधेनावस्थानं प्रतिषिध्यते । वध्यघातकविरोधे तु उभयमपि नास्तीत्याह *न हि वध्यघातकविरोधे ज्ञानयोर्युगपदुत्पत्तिरविनश्यतोश्च युगपदवस्थानमस्तीति* अदूषणमेतत् ।

परिमाणवैधर्म्यम्

**परिमाणं मानव्यवहारकारणम् । तच्चतुर्विधम्, अणुमहद्दीर्घं ह्रस्वञ्चेति । तत्र महद् द्विविधं नित्यमनित्यञ्च । नित्यमाकाशकालदिगात्मसु परममहत्त्वम् । अनित्यं त्र्यणुकादावेव । तथा च अण्वपि द्विविधं नित्यमनित्यञ्च । नित्यं परमाणुमनःसु । तत्तु पारिमाण्डल्यम् । अनित्यं द्व्यणुक एव ।**

इदानीमुद्देशक्रमेणावसरप्राप्तस्य परिमाणस्य लक्षणपरीक्षार्थं *परिमाणं मानव्यवहारकारणम्* इत्यादि प्रकरणम् । व्यवहृतिर्व्यवहारो ज्ञानम्, व्यवह्रियतेऽनेनेति व्यवहारोऽभिधानम् तयोर्हेतुः परिमाणमित्युक्तेऽतिप्रसङ्गस्तदर्थं मानपदम् । तथापि मानव्यवहारहेतुत्वमाकाशात्मनोर्विद्यत इति विशेषणत्वे सतीति विशेषणम् । तथापि परिमाणत्वसामान्येन व्यभिचारपरिहारार्थं द्रव्यविशेषणत्वे सतीति विशेषणमभ्यूह्यम् । तथा हि, परिमाणम्, इतरस्माद् भिद्यते, द्रव्यविशेषणत्वे सति मानव्यवहारकारणत्वात्, यस्तु इतरस्मादपरिमाणान्न भिद्यते न चासावेवम्, यथा रूपादिरिति । व्यवहारो वा साध्यः ।

तथा आवर्त्यमानमिदमेव वाक्यमनेकार्थमिति परीक्षापरत्वेन सम्बद्ध्यते । तथाहि, मानव्यवहारो विशेष्यज्ञानत्वाद् विशेषणमपेक्षते दण्ड्यादिज्ञानवत् । न च रूपादीनामन्यतमस्तद्विशेषणं तद्व्यवहारविलक्षणत्वादिति विलक्षणेनैव निमित्तेन भवितव्यम् । न चेदं कल्पनाज्ञानं वासनाप्रभवम्, तस्याः पूर्वमेव प्रतिषेधात् ।

*तच्चतुर्विधम्* इति विभागः । केन रूपेणेत्याह *अणुमहद्दीर्घं ह्रस्वञ्चेति* ।

ननु चायुक्तं चातुर्विध्यं चतुरस्रादिभेदस्यापि सम्भवात्, तन्न, महत्वस्यैव अवयवरचनाविशेषोपलम्भसहकारिणः चतुरस्रादिव्यवहारसम्पादकत्वात् । तथाहि, अवयवरचनाविशेषोपलम्भे सति चतुरस्रं त्र्यस्रं परिमण्डलमिति व्यवहारः, तदभावे च नेति न परिमाणान्तरसिद्धिः ।

नन्वेवं दीर्घत्वह्रस्वत्वव्यवहारोऽप्यवयवसंयोगविशेषोपलम्भादेव भविष्यतीत्यलं दीर्घत्वह्रस्वत्वपरिकल्पनया ? न, तदनुपलब्धावपि दीर्घत्वोपलब्धेः । तथाहि, मन्दमन्दप्रकाशे सत्यन्तरेणाप्यवयवरचनोपलम्भं स्थाण्वादौ दीर्घप्रतिभासो दृष्टः । न चैवं चतुरस्रप्रतिभास इत्यन्वयव्यतिरेकाभ्यामित्यूह्यम् ।

तत्र महत्त्वाणुत्वयोरप्यवान्तरभेदात् षड्विधमपि परिमाणमित्याह *महद् द्विविधं नित्यमनित्यञ्च* इति । *नित्यमाकाशकालदिगात्मसु* वर्तते । तच्च *परममहत्त्वम्* न तस्मादूर्ध्वं महत्त्वमस्तीति । *अनित्यं त्र्यणुकादावेव* इति । त्र्यणुकमादौ यस्य तत्तथोक्तम्, तत् तस्मिन्नेव, तत्र हि उत्पत्तिकारणसद्भावात् ।

तथा न परं महद् *अण्वपि द्विविधं नित्यमनित्यञ्च* । केष्वित्याह [*परमाणुमनःसु*] परमाणवश्च मनश्चेतिपरमाणुमनांसि तेषु वर्तते । *पारिमाण्डल्यम्* इति तस्य नाम । तथा हि परिमण्डलानि परमाणुमनांसि तेषां भावः पारिमाण्डल्यम्, तत् परिमाणमेव । तत्तु नित्यम्, उत्पत्तिविनाशकारणानुपलब्धेः । तथाहि, परमाणूनां कारणासम्भवान्न तत्परिमाणकारणम् अनेकत्वसंख्या प्रचयो वास्तीति । एतावत्तु कारणं परिमाणस्य । न च नित्यत्वादणूनां विनाशः सम्भवतीति तत्परिमाणस्य नित्यत्वमेव । *अनित्यं द्व्यणुक एव* इत्याश्रयान्तरव्युदासः ।

**कुवलयामलकबिल्वादिषु महत्स्वपि तत्प्रकर्षभावाभावमपेक्ष्य भाक्तोऽणुत्वव्यवहारः । दीर्घत्वह्रस्वत्वे च उत्पाद्यमहदणुत्वैकार्थसमवेते । समिदिक्षुवंशादिष्वञ्जसा दीर्घेष्वपि तत्प्रकर्षभावाभावमपेक्ष्य भाक्तो ह्रस्वत्वव्यवहारः ।**

ननु चायुक्तमेतद्, अन्यत्राप्यणुव्यवहारोपलब्धेः, न, तत्र मुख्यासम्भवेन उपचाराभ्युपगमात् इत्याह *कुवलयामलकबिल्वादिषु महत्स्वपि तत्प्रकर्षभावाभावमपेक्ष्य* परिमाणातिशयः । कुवलयाद्यपेक्षया तस्माद् वा प्रकर्षः, तस्य भावो विद्यमानता बिल्वादौ, तदभावमपेक्ष्यामलकेऽणुव्यवहारः । तथा तत्प्रकर्षः कुवलयापेक्षया परिमाणातिशयः, तस्य भावो विद्यमानता

आमलके, तदभावमपेक्ष्य कुवलयेऽणुव्यवहारः। यत्र हि वास्तवमणुत्वं तत्र परिमाणातिशयस्याभावो द्रष्टव्यः। तस्यान्यत्राप्युपलम्भाद् उपचारः प्रवर्तत एव।

यद् वा मुख्यासद्भावे किं प्रमाणमित्याह *भाक्तोऽणुव्यवहारः*। यथा हि माणवके सिंहव्यवहारो मुख्यापेक्षः, तद्वदयमणुव्यवहारोऽप्युपचरितत्वान्मुख्यपूर्व इत्यणुत्वसिद्धिः। तथा च कुवलयादिषु अणुव्यवहारो मुख्यपूर्वको भाक्तव्यवहारत्वात्, माणवके सिंहव्यवहारवत्।

यथा च महत्त्वाणुत्वयोर्नित्यानित्यभेदो नैवं दीर्घत्वह्रस्वत्वयोः, आश्रयान्तरानुपपत्तेः। क्व वा तयोर्वृत्तिरित्याशङ्कायामाह [ *दीर्घत्वह्रस्वत्वे च* ] दीर्घत्वञ्च ह्रस्वत्वञ्चेति दीर्घत्वह्रस्वत्वे। ते तु *उत्पाद्यमहदणुत्वैकार्थसमवेते* उत्पाद्ये च ते महदणुत्वे च उत्पाद्यमहदणुत्वे; ताभ्यां सहैकस्मिन्नर्थे समवेते। तथाहि, त्र्यणुकादावुत्पाद्यं महत्त्वं तत्रैव दीर्घत्वम्। द्व्यणुके चाणुत्वं तत्रैव ह्रस्वत्वमिति। परमाणूनां परिमण्डलत्वान्न ह्रस्वत्वम्, आकाशादेर्व्यापकत्वाच्च न दीर्घत्वम्, तद्विपरीतेषु तद्व्यवहारदर्शनात्।

अथ द्व्यणुकेष्वेव [ कथं ] ह्रस्वत्वमित्युक्तमन्यत्रापि तद्व्यवहारोपलब्धेः? तन्न, बाधकसद्भावेन अन्यत्रोपचाराभ्युपगमादित्याह *समिदिक्षुवंशादिष्वञ्जसा दीर्घेष्वपि तत्प्रकर्षभावाभावमपेक्ष्य भाक्तो ह्रस्वत्वव्यवहारः* इति। तथाहि, समिदादिषु दीर्घत्वोत्पत्तौ कारणसद्भावादञ्जसा मुख्यया वृत्त्या दीर्घत्वम्। दीर्घेष्वपि ह्रस्वत्वव्यवहारो दृष्ट इति मुख्यासम्भवात् उपचारः कल्प्यते। तत्र च तत्प्रकर्षभावाभावो निमित्तम्। तस्य वंशादेः प्रकर्षः समिदाद्यपेक्षया दीर्घत्वातिशयः, तस्य भावो विद्यमानता वंशादौ, तदभावमपेक्ष्य इक्षौ ह्रस्वत्वव्यवहारः। समिधमपेक्ष्य इक्षौ दीर्घत्वातिशयः, तत्र तदभावमपेक्ष्य समिधि ह्रस्वव्यवहारः।

यद्वा मुख्यह्रस्वत्वस्य सद्भावे किं प्रमाणम्? उपचरितो ह्रस्वव्यवहारः। तथाहि, समिदादिषु ह्रस्वव्यवहारः, मुख्यपूर्वकः, भाक्तव्यवहारत्वात्, माणवके सिंहव्यवहारवदिति।

**परिमाणोत्पत्तिप्रकारः**

**अनित्यं चतुर्विधमपि संख्यापरिमाणप्रचययोनि ।**

एवं चातुर्विध्यमुक्त्वोत्पत्तिकारणमाह *अनित्यं चतुर्विधमपि संख्यापरिमाणप्रचययोनि* इति । संख्या च परिमाणञ्च प्रचयश्चेति संख्यापरिमाणप्रचयाः, ते योनिः कारणमस्येति । संख्यापरिमाणप्रचयैः समस्तव्यस्तैर्जन्यत इति वाक्यार्थः । तथा च सूत्रम् "कारणबहुत्वात् कारणमहत्त्वात् प्रचयविशेषाच्च महदिति" ( वै० सू० ७।१।९ ) । अनित्यग्रहणम् नित्यव्युदासार्थम् । चतुर्विधमिति न्यूनताव्यवच्छेदः ।

**तत्रेश्वरबुद्धिमपेक्ष्योत्पन्ना परमाणुद्व्यणुकेषु बहुत्वसंख्या तैरारब्धे त्र्यणुकादिलक्षणे कार्यद्रव्ये रूपाद्युत्पत्तिसमकालं महत्त्वं दीर्घत्वञ्च करोति ।**

सूत्रार्थप्रक्रमस्य विवक्षितत्वाद् उद्देश [ क्रमा ] तिक्रमेण महत्त्वोत्पत्तौ कारणमाह *तत्रेश्वरबुद्धिमपेक्ष्योत्पन्ना परमाणुद्व्यणुकेषु बहुत्वसंख्या तैरारब्धे त्र्यणुकादिलक्षणे कार्यद्रव्ये रूपाद्युत्पत्तिसमकालं महत्त्वं दीर्घत्वञ्च करोति* । तथा चेश्वरबुद्धिर्नित्या सकलार्थविषया चेति एकैकगुणालम्बनास्त्येव । तामपेक्ष्यैकैकगुणैः परमाणुद्व्यणुकेषु त्रित्वमारभ्यते । परमाणुद्व्यणुकेष्विति द्व्यणुकव्यवच्छेदार्थम् । परमाणुभ्यामेव द्व्यणुकमारभ्यते, न द्व्यणुकाभ्याम्, व्यर्थारम्भप्रसङ्गादित्युक्तम् । अतः परमाणुद्व्यणुकारब्धे कार्यद्रव्य इति । तैरारब्धं रूपाद्यपि भवतीति तन्निषेधार्थं द्रव्यग्रहणम् । द्रव्यपदञ्च द्रव्यत्वेऽपि वर्त्तत इत्यभिव्यक्तिविवक्षया तदप्यारब्धमिति कार्यग्रहणम् । त्र्यणुकादिलक्षण इति । त्र्यणुकञ्च तदादिलक्षणं कारणकार्यस्वरूपञ्चेति । यद् वा सर्वमहद्द्रव्याणामादौ लक्ष्यत इत्यादिलक्षणम्, तस्मिन्नुत्पन्ने रूपाद्युत्पत्तिसमकालं द्व्यणुकेषु वर्तमानं त्रित्वं महत्त्वं दीर्घत्वञ्च करोतीति ।

तथाहि, कार्यवस्तुनोऽसमवायिकारणपूर्वकत्वं दृष्टमिति त्र्यणुकस्य समवायिकारणत्वाद् अन्येनासमवायिकारणेन भवितव्यम् । द्व्यणुकेषु च महत्त्वस्याभावान्न कारणगुणपूर्वकत्वम् । अथाणुपरिमाणादेव त्र्यणुके महत्त्वम्, कारणपरिमाणात् कार्यपरिणामस्यातिशयोपलब्धेः । तथा च पटापेक्षया

सूक्ष्मास्तन्तवस्तदपेक्षया तदंशव इति दृष्टम् । एवं द्व्यणुकापेक्षया अतिशयपरिमाणसम्बन्धि त्र्यणुकं भविष्यतीति ।

तदसत् । यच्छब्दवाच्यं कारणपरिमाणं तच्छब्दवाच्यं कार्येऽपीति त्र्यणुके द्व्यणुकपरिमाणमेव स्यात् । यथा महच्छब्दवाच्यात् तन्तुगणाद् उत्पद्यमानः पटस्तच्छब्दवाच्य इति । एवमणुपरिमाणादणुपरिमाणमेव स्यात् । परमाणुपरिमाणाच्च द्व्यणुकेऽपि परिमाणमिति कल्पनायामणुत्वस्यासम्भवे कथं तस्मान्महत्त्वमिति । न चाणुत्वस्यासम्भवे परमाणुरिति युक्तम् । तथा चाणोरतिशयेनाणुः परमाणुरिति व्यपदिश्यते । अन्यथा हि विशेषणमनर्थकमेव स्याद् व्यवच्छेद्याभावात् । महत्त्वञ्चापेक्ष्याणुव्यवहारः, न च परमाणुरिति । न च महत्त्वम् अणुपरिमाणस्य कारणत्वाभ्युपगमे । तस्मादण्वभावे परमाणुव्यवहारोच्छेदप्रसङ्गात् न परमाणुपरिमाणं कारणम् ।

इतश्च परमाणुपरिमाणस्याणुत्वोत्पत्तावणुत्वस्य महत्त्वोत्पत्तावसमवायिकारणत्वमयुक्तम् । अत्यन्तसमानजातीयस्यासमवायिकारणत्वोपलब्धेः । तथा चात्यन्तं समानजातीयमसमवायिकारणं यथा शुक्लतमाद् रूपाच्छुक्लतममेव रूपम् । अत्यन्तविजातीयञ्च यथा संयोगाच्छब्द इति । न चैवमणुपरिमाणं महत्त्वोत्पत्तौ, परमाणुपरिमाणश्चाणुत्वोत्पत्ताविति । तस्यापि परिमाणत्वान्नात्यन्तं विजातीयत्वम् । परमाणुत्वञ्चाणुत्वस्यैव विशेषोऽणुत्वञ्च महत्त्वाज्जात्यन्तरमेवेति नात्यन्तसमानजातीयत्वम् ।

न चात्र प्रचयः सम्भवति, रूपादीनां स्वकार्ये सामर्थ्यावधारणात् । अतः संख्यैवासमवायिकारणमिति कल्प्यते । प्रत्यासत्तिर्महती । तथा च महत्त्वं दीर्घत्वञ्च त्र्यणुके वर्तते त्र्यणुकश्च द्व्यणुकेषु, त्रित्वमपि तेष्वेवेति कार्यकारणैकार्थसमवायलक्षणा प्रत्यासत्तिरिति ।

नन्वेवमीश्वरबुद्धेर्नित्यत्वाद् द्व्यणुकानाञ्च कालान्तरमवस्थानाद् अवस्थायित्वमेव, संख्याया नित्यद्रव्यसमवेतायाश्च नित्यत्वमिति । नैष दोषः । संख्यायाः कार्यत्वादवश्यं विनाशित्वमिति । निर्हेतुकविनाशप्रतिषेधेनास्या विनाशहेतोरभावात् स्थितिहेत्वदृष्टाभावाद् विनाशः कल्प्यते ।

यद्वा ईश्वरशब्दो योगीश्वरे वर्तत इति तद्बुद्धेरनित्यत्वात् तद्विनाशो घटत एव संख्यायाः।

तथाहि, द्व्यणुके क्रियोत्पन्ना, यदैव विभागमारभते, संयोगस्य विनश्यत्ता, तदैवैकत्वसामान्ये ज्ञानमुत्पद्यते, अपेक्षाबुद्धेरुत्पद्यमानता, ततः संयोगस्य विनाशः, उत्तरसंयोगस्योत्पद्यमानता, अपेक्षाबुद्धेरुत्पादः, त्रित्वस्योत्पद्यमानता, ततो द्व्यणुकस्य द्व्यणुकाभ्यां संयोगस्योत्पादः, त्र्यणुकस्योत्पद्यमानता, विभागकर्मणोर्विनश्यत्ता, त्रित्वस्योत्पादः, तत्सामान्यज्ञानस्योत्पद्यमानता, ततस्त्र्यणुकस्योत्पादः, विभागकर्मणोर्विनाशः, त्रित्वसामान्यज्ञानस्योत्पादः, महत्त्वदीर्घत्वयोरुत्पद्यमानता, अपेक्षाबुद्धेर्विनश्यत्ता, त्रित्वगुणबुद्धेरुत्पद्यमानता, ततो महत्त्वदीर्घत्वयोरुत्पादः, अपेक्षाबुद्धेर्विनाशः, त्रित्वगुणस्य विनश्यत्ता, त्रित्वगुणबुद्धेरुत्पादः, द्रव्यज्ञानस्योत्पद्यमानता, ततो द्रव्यज्ञानसमकालं त्रित्वस्यापि विनाश इति।

**द्विबहुभिर्महद्भिश्चारब्धे कार्यद्रव्ये कारणमहत्त्वान्येव महत्त्वमारभन्ते न बहुत्वम्, समानसंख्यैश्चारब्धेऽतिशयदर्शनात्।**

महत्त्वान्महत्वमुत्पद्यत इत्याह * द्विबहुभिर्महद्भिश्चारब्धे कार्यद्रव्ये कारणमहत्त्वान्येव महत्त्वमारभन्ते * इति। द्वे च बहवश्च तैर्द्विबहुभिः। किं विशिष्टैः ? महद्भिः। आरब्धे कार्यद्रव्ये कारणगतानि महत्त्वान्येव महत्त्वमारभन्ते न बहुत्वम्। कथम् ? समानसंख्यैः कारणैरारब्धे कार्येऽतिशयदर्शनात्।

तथाहि, स्थूलैश्चतुर्भिरारब्धं कार्यमेकम्, अन्यैश्च सूक्ष्मैश्चतुर्भिरेव। यत्तु स्थूलैरारब्धं तदतिशयेन महत् सम्पद्यत इति महत्त्वस्यैव कारणत्वम्, संख्यायाश्चोभयत्र साधारणत्वात् कारणत्वे परिमाणस्याविशेषः स्यात्। यत्र च द्वयोरारम्भकत्वं, तत्र बहुत्वासम्भवेन महत्त्वस्यैव कारणत्वमिति।

अन्ये तु संख्यायाः परिमाणवदन्वयव्यतिरेकाभ्यामन्यत्र सामर्थ्यावधारणाद् इहापि कारणत्वमिति मन्यन्ते। यच्चेदं समानसंख्यैरारब्धेऽपि एकत्रातिशयदर्शनं [न] तत् संख्यायाः कारणत्वप्रतिषेधपरम्, परिमाणस्यापि अका-

रणत्वप्रसङ्गात् । तथा हि, यथा समानसंख्यैरारब्धमपेक्ष्य तत्र परिमाणातिशयस्तथा स्थूलतमैः समानसंख्यैरारब्धमपेक्ष्य [तत्परिमाणैरसमानसंख्यैरारब्धे] तत्परिमाणस्यानतिशयोपलब्धेः परिमाणस्याप्यकारणत्वं स्यात् । तथा अधिकपरिमाणापेक्षयानतिशयसद्भावेऽपि एतत् [चेत्] कारणम् अन्वयव्यतिरेकाभ्यां सामर्थ्यावगतेरिष्यते, तत्सद्भावे तस्य भावस्तदभावे चाभाव इत्येतत् संख्यायामपि समानम् । यदि चात्र महत्त्वोत्पत्तावकारणं संख्या, तर्हि स्थूलैस्त्रिभिरारब्धमेकम् अन्यत् चतुर्भिरित्युभयत्रापि कारणपरिमाणस्याविशेषात् कार्यपरिमाणस्याविशेषः स्यात् । न चैतत् । चतुर्भिराब्धे परिमाणातिशयदर्शनात् । अतः संख्यापि कारणमिति । तथा समानसंख्यैः समानपरिमाणैश्चारब्धे महत्त्वमुभाभ्यां सम्पद्यत इति युक्तम्, अन्यत्रोभयोः सामर्थ्यावधारणाद्, इह प्रत्यासन्नत्वाच्चेति । तथा च त्रितन्तुकादि परिमाणं त्रितन्तुकादौ वर्तते । त्रितन्तुकादौ च तन्तुषु तत्परिमाणञ्च तत्संख्या च तेष्वेवेति कार्यकारणैकार्थसमवायलक्षणा प्रत्यासत्तिरिति । कथं तर्हीदं वाक्यम् "कारणमहत्त्वान्येव महत्त्वमारभन्ते न बहुत्वमिति ? अवधारणप्रतिषेधार्थम् । तथाहि, यदुक्तं समानसंख्यैरारब्धेऽतिशय[ा]दर्शनात् कारणमहत्त्वान्येव महत्त्वमारभन्त इति, एतन्न । बहुत्वस्याप्युक्तन्यायेन कारणत्वात् ।

यद् वा समानसंख्यैराब्धेऽतिशय[ा]दर्शनादिति महत्त्वस्य कारणत्वोपदर्शन मेतत्, नावधारणमिति ।

**प्रचयश्च तूलपिण्डयोर्वर्तमानः पिण्डारम्भकावयवप्रशिथिलसंयोगापेक्षः, इतरेतरपिण्डावयवसंयोगापेक्षो वा द्वितूलके महत्त्वमारभते न बहुत्वमहत्त्वानि, समानसंख्यापलपरिमाणैरारब्धेऽतिशयदर्शनात् ।**

प्रचयस्य कारणत्वमाह * प्रचयश्च तूलपिण्डयोर्वर्तमानः पिण्डारम्भकावयव[प्र]शिथिलसंयोगापेक्षः, इतरेतरपिण्डावयवसंयोगापेक्षो वा द्वितूलके महत्त्वमारभते * इति ।

तूलपिण्डश्च तूलपिण्डश्च तूलपिण्डौ, तयोर्वर्तमानः संयोगः प्रचयः । किंविशिष्टः ? पिण्डारम्भकप्रशिथिलसंयोगापेक्ष इति । पिण्डारम्भकाश्च

प्रशिथिलसंयोगाश्च तानपेक्षत इति तदपेक्षः । इतरेतरपिण्डावयवसंयोगापेक्षश्चेति । वा समुच्चये, न तू विकल्पे, अपेक्षाकारणत्वेनाभ्युपगतयोरुभयोरप्यत्र सद्भावात् । इतरस्य पिण्डस्येतरपिण्डावयवैः संयोगस्तथा इतरस्येतरावयवैरिति । इतरेतरपिण्डयोर्वा येऽवयवास्तेषां संयोगास्तानपेक्षत इति तदपेक्षः । स च द्वाभ्यां तूलकाभ्यामारब्धेऽपि तूलके महत्त्वमारभत इति । त्रितूलकादावप्येतत् समानम् । प्रत्यासत्तिस्तु महती द्वितूलकपरिमाणे द्वितूलके वर्तते, द्वितूलके तु तूलपिण्डयोः संयोगोऽपि । तत्रैव बहुत्वमहत्त्वयोः सद्भावेऽपि कारणत्वप्रतिषेध इत्याह * न बहुत्वमहत्त्वानि * द्वितूलकादौ महत्त्वमारभन्ते । कुतः ? * समानसंख्यापलपरिमाणैरारब्धेऽतिशयदर्शनात् ।

तथाहि, त्रिभिस्तूलपिण्डैः पञ्चपलैः प्रशिथिलावयवसंयोगैरारब्धमेकम्, अन्यच्च तद्विपरीतैः । तत्र यत् प्रशिथिलावयवसंयोगैरारब्धं तत्र परिमाणातिशयो दृष्ट इति प्रचयस्यैव कारणत्वम्, न संख्यापलपरिमाणानाम्, तत्कारणत्वे चोभयत्राविशेषः स्यात् ।

अथ पलस्य सर्वत्र परिमाणाकारणत्वात् प्रसक्त्यभावे न युक्तः प्रतिषेधः । तथाहि, पाषाणादौ पलातिशयसद्भावेऽपि परिमाणस्यातिशयाभावः । तूलपिण्डादौ च तदभावेऽपि अतिशयोपलब्धेर्न पलस्य गुरुत्वविशेषत्वात् कारणत्वम् । किमर्थस्तत्र प्रतिषेधः ? व्यामोहप्रतिषेधार्थः । तथा च परे व्यामोहाद् यद्येवंविधस्यापि पलस्य कारणत्वं प्रतिपद्येरंस्तदपि नास्ति, समानपलैरारब्धेऽतिशयादर्शनात् ।

**अन्ये** तु अस्यैव दोषस्य परिहारार्थं पलशब्दस्य समानशब्दपर्यायतां ब्रुवते । समानसंख्यापलपरिमाणैरिति समानसंख्यैः समानपरिमाणैरित्यर्थः ।

ननु चायुक्तमवधारणं प्रचयस्यैव कारणत्वमिति, बहुत्वमहत्त्वयोरप्यन्यत्र सामर्थ्यावधारणे सतीह प्रत्यासन्नत्वात् । न च समानसंख्यापलपरिमाणैरारब्धेऽपि एकत्रातिशयदर्शनं बहुत्वमहत्त्वयोः कारणत्वप्रतिषेधे हेतुः, अन्यापेक्षयानतिशयसद्भावे प्रचयस्याप्यकारणत्वप्रसङ्गात् । तथाहि, समानसंख्यापलपरिमाणैः प्रशिथिलावयवसंयोगैश्चतुर्भिरारब्धमेकम् अन्यच्च तथाविधै-

स्त्रिभिरिति । चतुर्भिरारब्धेऽतिशयदर्शनात् संख्यापि कारणम् । तथा स्थूलैश्चतुर्भिः प्रशिथिलावयवसंयोगैरारब्धमेकम् अन्यच्च स्थूलतमैस्तथाविधैरेवेत्यत्र कारणपरिमाणातिशयेन कार्यपरिमाणस्यातिशयोपलब्धेः परिमाणस्यापि कारणत्वम् । यत्र तु समानसंख्यापरिमाणैः प्रशिथिलावयवसंयोगारब्धैर्महत्त्वमारभ्यते तत्राविशेषेण त्रितयस्यापि कारणत्वम्, अन्यत्र सामर्थ्यावधारणे सतीह प्रत्यासन्नत्वात् । वाक्यस्य तु व्याख्यानं पूर्ववत् ।

**द्वित्वसंख्या चाण्वोर्वर्तमाना द्व्यणुकेऽणुत्वमारभते ।**

अणुत्वोत्पत्तौ कारणमाह * द्वित्वसंख्या चाण्वोर्वर्तमाना द्व्यणुकेऽणुत्वमारभते * इति । द्व्यणुकाणुपरिमाणं कार्यम् । तस्य हि समवायिकारणं द्व्यनुकमित्यन्येनासमवायिकारणेन भवितव्यम् । परमाणुपरिमाणस्य चारम्भकत्वप्रतिषेधेऽन्यस्य चासम्भवाद् द्वित्वसंख्यैवाण्वोर्वर्तमाना कार्यकारणैकार्थसमवायेन द्व्यणुकाणुपरिमाणोत्पत्तावसमवायिकारणमिति । अणुशब्दश्च सामान्यशब्दत्वात् परमाणावपि वर्तत एव, अणुत्वे सति परम इति विशेषणात् । विनाशस्तु द्वित्वसंख्यायाः पूर्ववद्व्याख्येयः ।

**महत्त्ववत् त्र्यणुकादौ कारणबहुत्वमहत्वसमानजातीयप्रचयेभ्यो दीर्घत्वस्योत्पत्तिः । अणुत्ववद् द्व्यणुके द्वित्वसंख्यातो ह्रस्वत्वस्योत्पत्तिः ।**

दीर्घत्वोत्पत्तौ कारणमाह *महत्त्ववत् त्र्यणुकादौ कारणबहुत्वमहत्त्वसमानजातीयप्रचयेभ्यो दीर्घत्वस्योत्पत्तिः* इति । यथा हि महत्त्वं कारणबहुत्व [महत्त्व] समानजातीयप्रचयेभ्यो भवति एवं दीर्घत्वमपीति । त्र्यणुके कारणबहुत्वादेव दीर्घत्वम्, द्वितन्तुके कारणदीर्घत्वादेवेति । त्रितन्तुकादौ बहुत्वदीर्घत्वप्रचयैर्दीर्घत्वमारभ्यते इत्यतिदेशार्थः । तथा * अणुत्ववद् [द्व्यणुके] द्वित्वसंख्यातो ह्रस्वत्वस्योत्पत्तिः * इति । यथा कारणान्तरासम्भवाद् द्वित्वसंख्या अणुत्वस्योत्पत्तावसमवायिकारणम् एवं ह्रस्वत्वस्यापीति ।

**अथ त्र्यणुकादिषु वर्तमानयोर्महत्त्वदीर्घत्वयोः परस्परतः को विशेषः, द्व्यणुकेषु चाणुत्वह्रस्वत्वयोरिति ? तत्रास्ति महत्त्वदीर्घत्वयोः**

प्रत्ययानुवृत्तिवद् अर्थान्तरेण संयोगे विभक्तप्रत्ययानुवृत्तिरस्तीति । यच्चाप्रातिज्ञानं तद् बाधकसद्भावात् संयोगाभावे द्रष्टव्यमिति । अन्यथा हि पिण्डस्य देशान्तरगमने मरणे वा अवस्थिततत्वाद् एक पिण्डग्रहणेऽपि ग्रहणं स्यात् । न चैतदस्ति । तस्माद् विद्यमानक्रिये द्रव्ये विभक्तप्रत्ययो मुख्योऽन्यदा तु तत्सामान्याद् भाक्त इति ।

क्वचिदाश्रयविनाशादेव विनश्यतीति । कथम् ? यदा द्वितन्तुककारणावयवेंऽशौ कर्मोत्पन्नम् अंशवन्तराद् विभागमारभते तदैव तन्त्वन्तरेऽपि कर्मोत्पद्यते विभागाच्च तन्त्वारम्भकसंयोगविनाशस्तन्तुकर्मणा तन्त्वन्तराद् विभागः क्रियत इत्येकः कालः । ततो यस्मिन्नेव कालेविभागात् तन्तुसंयोगविनाशस्तस्मिन्नेव काले संयोगविनाशात् तन्तुविनाशः, तस्मिन् विनष्टे तदाश्रितस्य तन्त्वन्तरविभागस्य विनाशः इति ।

एवं तर्हि उत्तरविभागानुत्पत्तिप्रसङ्गः कारणविभागाभावात्, ततः प्रदेशान्तरसंयोगवति संयोगाभाव इत्यतो विरोधिगुणासम्भवात् कर्मणश्चिरकालावस्थायित्वम्, नित्यद्रव्यसमवेतस्य च नित्यत्वमिति दोषः । कथम् ? यदा द्व्यणुकारम्भकपरमाणौ कर्मोत्पन्नम् अण्वन्तराद् विभागं करोति तदैवाण्वन्तरेऽपि कर्म, ततो यस्मिन्नेव काले विभागाद् द्रव्यारम्भकसंयोगविनाशस्तदैवाण्वन्तरकर्मणा द्व्यणुकाण्वोर्विभागः क्रियते, ततो यस्मिन्नेव काले विभागाद् द्व्यणुकाणुसंयोगस्य विनाशस्तस्मिन्नेव काले संयोगविनाशाद् द्व्यणुकस्य विनाशः, तस्मिन् विनष्टे तदाश्रितस्य द्व्यणुकाणुविभागस्य विनाशः । ततश्च विरोधिगुणासम्भवान्नित्यद्रव्यसमवेतकर्मणो नित्यत्वमिति ? तन्त्वंशवन्तरविभागाद् विभाग इत्यदोषः । आश्रयविनाशात् तन्त्वोरेव विभागो विनष्टो न तन्त्वंशवन्तरविभाग इत्येतस्मादुत्तरो विभागो जायते । अङ्गुल्याकाशविभागाच्छरीराकाशविभागवत् तस्मिन्नेव काले कर्म संयोगं कृत्वा विनश्यतीत्यदोषः ।

एवं संयोगाद् विभागस्य विनाशं प्रतिपाद्य आश्रयविनाशेन विनाशमाह * क्वचिच्चाश्रयविनाशाद् विनश्यति * इत्यादिना । कथमित्यव्युत्पन्नप्रश्नानन्तरमाह * यदा द्वितन्तुककारणावयवेंऽशौ * इत्यादि । द्वितन्तुकस्य कारणं तन्तुः, तस्यावयवोंऽशुस्तस्मिन् स्वकारणात् कर्मोत्पन्नं यदा अंश्वन्तराद् विभागं (द्रव्यारम्भकसंयोगस्य विनाशात् तन्तुविनाशस्तस्मिन् विनष्टे तदाश्रितस्याविरोधिनमारभते[1]) [आरभते] तस्मिन्नेव काले * तन्त्वन्तरेऽपि कर्मोत्पद्यते, विभागाच्च तन्त्वारम्भकसंयोगविनाशः, तन्तुकर्मणा तन्त्वन्तराद् विभागः क्रियते * इत्यनयोरेकः कालः । * ततो यस्मिन्नेव काले विभागात् * तन्तुसंयोगस्य द्वितन्तुकारम्भकस्य विनाशस्तस्मिन्नेव काले तन्त्वारम्भकस्यांशुसंयोगस्य विनाशात् तन्तुविनाशः । * तस्मिन् विनष्टे तदाश्रितस्य तन्त्वन्तरविभागस्य विनाशः * अन्यस्य विनाशकारणस्याभावात् । तदैव द्वितन्तुकस्याप्याश्रयविनाशात् संयोगविनाशाच्च विनाश इति ।

एवमाश्रयविनाशाद् विनाशेऽभिहितेऽनिष्टमुपपादयति * एवं तर्हि उत्तरविभागानुत्पत्तिप्रसङ्ग * इति । उत्तरविभागस्तन्तोराकाशादिदेशेन विभागः, तस्यानुत्पत्तिः । * कारणविभागाभावात् * । कारणयोस्तन्त्वोर्विभागः । यद् वा कारणञ्च तद् विभागश्च, तस्य द्रव्यविनाशसमकालमभावाद् आकाशदेशेन विभागस्यानुत्पत्तिः । न च संयोगविनाशमपेक्ष्य द्रव्यविनाशसमकालं कारणविभागस्य विभागारम्भकत्वम्, विनश्यदवस्थस्यासमवायिकारणत्वानभ्युपगमात् । यथाश्रुतग्रन्थे वाचोद्यमेतत् ।

ततश्च तन्तोराकाशादिदेशेन विभागानुत्पादे तत्संयोगस्य प्रतिबन्धकस्यावस्थानान्न कर्म उत्तरसंयोगं कुर्यादित्याह * प्रदेशान्तरसंयोगवति संयोगाभावः * इत्यतः प्रदेशान्तरसंयोगस्य विरोधिगुणस्यासम्भवात् कर्मणः कालान्तरावस्थायित्वम् । तस्य च क्षणिकत्वं प्रमाणसिद्धमिति व्याघातः । तथा नित्यद्रव्यसमवेतस्य कर्मणो नित्यत्वमिति दोषः । कथमित्याह * यदा द्व्यणुकारम्भक परमाणौ * स्वकारणात् कर्मोत्पन्नम् अण्वन्तराद्

---

१. बन्धनीमध्यगतोऽसङ्गतो ग्रन्थो मातृकायां विद्यतेऽस्माभिर्यथामति मूलमनुसृत्यात्र पाठः परिकल्पित इति ज्ञेयम् ।

विभागं द्रव्यारम्भकसंयोगविरोधिनम् आरभते * तदैवाण्वन्तरेऽपि * अनारम्भके कर्म उत्पद्यते । ततोऽनन्तरं * यस्मिन्नेव काले विभागात् * द्रव्यारम्भकसंयोगस्य विनाशस्तदैवानारम्भकाणुकर्मणा * द्व्यणुकाण्वोर्विभागः क्रियते, ततो यस्मिन्नेव काले विभागात् * द्व्यणुकस्याणुना * संयोगस्य विनाशस्तस्मिन्नेव काले * संयोगस्य द्रव्यारम्भकस्य विनाशात् * द्व्यणुकस्य विनाशः * । तस्मिन् द्व्यणुके विनष्टे * तदाश्रितस्य द्व्यणुक[ाणु]विभागस्य विनाशः * ततः कारणविभागाभावाद् उत्तरविभागानुत्पत्तौ तत्संयोगस्याव्यावृत्तेर्न कर्म उत्तरसंयोगं करोतीति, विरोधिगुणस्यासम्भवात् परमाणुसमवेतस्य कर्मणो नित्यत्वं स्यादिति । प्राक्तनचोद्यस्य प्रतिसमाधानमाह * तन्त्वंश्वन्तरविभागाद् विभाग इत्यदोषः * ।

ननु तन्त्वंशुविभागस्तन्तुक्रियाकार्यो न भवत्येव, अंशोर्द्वितन्तुकोत्पत्तावाकाशादिवदकारणत्वात् । नाप्यंशुक्रियाकार्यः, तन्तूत्पत्तौ तन्त्वन्तरस्याकाशवदेवाकारणत्वात् । कारणे चोत्पन्नं कर्मं कारणान्तरविभागसमकालकारणेन विभागं नारभते, विशिष्टविभागानुत्पत्तिप्रसङ्गादित्युक्तम् । न च कारणं विना कार्यं भवतीति तन्त्वंशुविभागासम्भव एव । नैतदेवम् । अंशुक्रियाजनिताद् विभागात् तस्योत्पत्त्यभ्युपगमात् । तथाहि, अंशुक्रियाजनितो विभागः संयोगविनाशविशिष्टं कालमपेक्ष्य तन्तुविनाशसमकालम् आकाशादिदेशेनेव तन्त्वन्तरेणापि विभागमारभते । तन्तुविनाशविशिष्टञ्चापेक्ष्य द्वितन्तुकविनाशसमकालञ्चाश्रयविनाशात् तन्त्वोरेव परस्परं विभागो विनष्टो न तन्त्वन्तरविभागोंऽशुक्रियाजनिताद् विभागाद् उत्पन्नो विनष्ट इत्येकस्मात् तन्त्वन्तरविभागाद् उत्तरो विभागस्तन्त्वाकाशादिविभागो जायते । * अङ्गुल्याकाशबिभागाच्छरीराकाशविभागवत् * इत्युदाहरणम् । यथा अङ्गुल्याकाशादिविभागाद् हस्ताकाशविभागः, तस्माच्च विभागाच्छरीराकाशविभागस्तद्वद् इहाप्यंशुक्रियाजनिताद् विभागात् तन्त्वंशुविभागः, तस्माच्च विभागात् तन्त्वाकाशविभागो जायत इति । तस्मिन्नुत्पन्ने प्राक्तनसंयोगस्य प्रतिबन्धकस्याभावात् कर्म उत्तरसंयोगं कृत्वा तस्माद् विनश्यतीति न कालान्तरावस्थायित्वं दोषः ।

नन्वेतस्मिन् पक्षे कथमुत्तरसंयोगात् तन्त्वाकाशादिविभागस्य निवृत्तिः, तन्तुकर्मणा पारम्पर्येणाप्यजनितत्वात् ? न, विभागजनिते विभागे नियमानुपलब्धेः । अन्ये तु तन्तावुत्पन्ना क्रिया तन्त्वन्तरेणेव तदारम्भकेणांशुनापि विभागं करोत्येव, पारम्पर्येणांशोरपि कारणत्वात् । आकाशादिश्च पारम्पर्येणापि द्वितन्तुकोत्पत्तावकारणमिति । तन्तुक्रिया अवयवान्तरविभागसमकालं न तेन विभागं करोतीति । यद् वा अंशुक्रिया अंश्वन्तरादिवत् तन्त्वन्तरेणापि विभागमारभते, अंशुकार्येण सहैव कार्यारम्भकत्वात् । अतश्चाश्रयविनाशात् तन्त्वोरेव विभागो विनष्टो न तु तन्त्वन्तरविभागः । तस्मात् तन्त्वाकाशादिविभागो जायते अङ्गुल्याकाशादिविभागाच्छरीराकाशादिविभागवत् ।

ननु अङ्गुल्याकाशविभागाद् हस्ताकाशविभागः कारणाकारणविभागस्य कार्याकार्यविभागारम्भकत्वात्, नत्वङ्गुलेः शरीरं कार्यमिति । अतो यद्यपि अङ्गुल्याकाशविभागस्य शरीराकाशविभागेन सह आकाशवृत्तित्वात् प्रत्यासत्तिरस्ति तथाप्यकारणत्वमेव । तस्माच्छरीरारम्भकत्वाद् उपचारेण हस्त एव शरीरमिति युक्तम् । एतावच्चोदाहरणम्, यथा अङ्गुल्याकाशविभागात् कारणाकारणविभागाद् हस्ताकाशविभागस्तथा तन्त्वंशुविभागात् तन्त्वाकाशविभाग इति ।

**अथ वा अंश्वन्तरविभागोत्पत्तिसमकालं तस्मिन्नेव तन्तौ कर्मोत्पद्यते, ततोऽश्वन्तरविभागात् तन्त्वारम्भकसंयोगविनाशः, तन्तुकर्मणा च तन्त्वन्तराद् विभागः क्रियते इत्येकः कालः । ततः संयोगविनाशात् तन्तुविनाशस्तद्विनाशाच्च तदाश्रितयोर्विभागकर्मणोर्युगपद् विनाशः ।**

*अथ वा* इति विभागस्याश्रयविनाशेन विनाशे प्रकारान्तरोपन्यासः, न तु प्रकृताक्षेपसमाधानम्, कालान्तरावस्थायिनि द्रव्ये कर्मणः कालान्तरावस्थायित्वोद्भावनात् । अतः *अश्वन्तरविभागोत्पत्तिसमकालं तस्मिन्नेव तन्तौ* विभज्यमानांशौ कर्म उत्पद्यते । ततोऽनन्तरम् अंशु-

विभागात् * तन्त्वारम्भकसंयोगविनाशः तन्तुकर्मणा च तन्त्वन्तराद् विभागः क्रियत इत्येकः कालः, ततः संयोगविनाशात् तन्तुविनाशः * । तन्त्वन्तरविभागाच्च तत्संयोगविनाशः, ततो द्वितन्तुकस्योभयविनाशाद् विनाशः, तन्तुविनाशाच्च * तदाश्रितयोर्विभागकर्मणोर्युगपद् विनाशः * इति ।

**तन्तुवीरणयोर्वा संयोगे सति द्रव्यानुत्पत्तौ पूर्वोक्तेन विधानेनाश्रयविनाशसंयोगाभ्यां तन्तुवीरणविभागविनाश इति ।**

अथ नित्यद्रव्यसमवेतस्य नित्यत्वं स्यादित्याक्षेपप्रतिसमाधानद्वारकं वाक्यम् * तन्तुवीरणयोर्वा * इत्यादि । यथा हि, तन्तुवीरणयोः संयोगे सति द्रव्यानुत्पत्तिर्विजातीयत्वात्, एवं द्व्यणुकाण्वोरपि संयोगाद् द्रव्यं नोत्पद्यते । तथाहि, एकद्व्यणुकमनित्यम् अन्यश्च परमाणुर्नित्य इति विजातीयत्वम् । विजातीयसंयोगश्च द्रव्यानारम्भक इति द्व्यणुकाण्वोः संयोगेऽपि द्रव्यानुत्पत्तौ परमाणावुत्पन्नं कार्यं [ ? कर्म ] द्रव्यारम्भकसंयोगविरोधिविभागानुत्पादकत्वाद् आकाशदिदेशेनापि विभागमारभते वीरणकर्मवत् । एवं प्राक्तनसंयोगनिवृत्तावुत्तरसंयोगं कृत्वा विनश्यतीति * पूर्वोक्तेन विधानेन * विनाशः ।

यद् वा पूर्वोक्तविधानेनेत्ययमर्थः, तन्त्वारम्भकेंऽशौ कर्मोत्पत्तिसमकालं वीरणेऽपि कर्म, अंशुकर्मणा च अंश्वन्तराद् विभागः क्रियते । वीरणकर्मणा च तन्त्वन्तरादित्येकः कालः । ततो विभागाद् अंशुसंयोगविनाशे वीरणविभागाच्च वीरणतन्तुसंयोगविनाशः, ततो द्रव्यारम्भकसंयोगविनाशात् तन्तुविनाशः । तन्तुवीरणसंयोगविनाशे च उत्तरसंयोगः, ततश्चाश्रयविनाशसंयोगाभ्यां तन्तुवीरणविभागविनाश इति ।

अन्ये तु 'वा' शब्दस्योपमार्थत्वात् तन्तुवीरणयोरिव द्व्यणुकाण्वोः संयोगे सति द्रव्यं नोत्पद्यते, द्रव्यानुत्पत्तौ च द्व्यणुकाणुविभागस्य परमाणुकर्मणा द्व्यणुकारम्भकसंयोगविनाशसमकालं जनितस्य कथं विनाशः ? पूर्वोक्तेन विधानेनेति, आश्रयविनाशेनेत्यर्थः । यदा तु परमाणौ कर्मोत्पत्तौ परमाण्वन्तरविभागोत्पत्तिसमकालम् अस्मिन्नेव द्व्यणुके कर्मसञ्चिन्तनं तदा पूर्वोक्तेन विधानेन आश्रयविनाशाद् विभागकर्मणोर्युगपद् विनाश इति ।

द्व्यणुकारम्भके च परमाणौ कर्मोत्पत्तिसमकालम् अनारम्भकेऽपि कर्मसञ्चिन्तनात् तदाश्रयविनाशसंयोगाभ्यां तन्तुवीरणविभागविनाशवद् विनाश इत्यलम् ।

**परत्वापरत्ववैधर्म्यम्**

**परत्वमपरत्वञ्च परापराभिधानप्रत्ययनिमित्तम् । तत्तु द्विविधं दिक्कृतं कालकृतञ्च । तत्र दिक्कृतं देशविशेषप्रत्यायकम् । कालकृतञ्च वयोभेदप्रत्यायकम् ।**

इदानीं परत्वापरत्वयोर्लक्षणपरीक्षार्थम् *परत्वम्* इत्यादि प्रकरणम् । अभिधानञ्च प्रत्ययश्चेति, तयोर्निमित्तम् *परत्वमपरत्वञ्च* इत्युक्तेऽतिप्रसङ्गः, तदर्थं परापरग्रहणम् । तथापि परापराभिधानप्रत्ययनिमित्तत्वम् आकाशात्मनोर्न व्यावृत्तमिति विशेषणत्वे सतीत्यूह्यम् । तथा सामान्यमपि विशेषणत्वे सति परापराभिधानप्रत्ययनिमित्तमतो द्रव्यग्रहणम् । तथाहि, परत्वापरत्वे, अन्यस्माद् भिद्येते द्रव्यविशेषणत्वे सति परापराभिधानप्रत्ययनिमित्तत्वात्, यस्त्वितरान्न भिद्यते न चासावेवम्, यथा रूपादिरिति । व्यवहारो वा साध्यः । अत्र च अभिधानपदेन संख्यादिलक्षणेष्वपि करणव्युत्पत्त्याभिधानम्, भावव्युत्पत्त्या च ज्ञानमित्युभयरूपो व्यवहारः प्रत्ययश्च विवक्षित इति ज्ञापयति । एकस्मिंश्च प्रकरणे गुणद्वयनिरूपणम् एकोत्पत्तेरितरोपायापेक्षिकत्वात्, पृथगभिधाने तु ग्रन्थबहुत्वं स्यादिति सङ्ग्रहत्वादेकदाभिधानम् ।

परत्वापरत्वयोः सद्भावे किं प्रमाणमित्यपेक्षायां परत्वमपरत्वञ्च परापराभिधानप्रत्ययनिमित्तमिति वाक्यं परीक्षापरत्वेन च योजनीयम् । तथाहि, परापराभिधानप्रत्ययः, विशेषणपूर्वकः, विशेष्याभिधानप्रत्ययत्वात्, दण्डीति विशेष्याभिधानप्रत्ययवत् । न च रूपादीनामन्यतमं विशेषणम्, तद्व्यवहारविलक्षणत्वात् । अबाध्यमानञ्च ज्ञानं निमित्तं विना न सम्भवत्येव । वासना तु निमित्तं तत्र न भवतीत्युक्तम् । अथ द्रव्यमेव विशिष्टोत्पादवशात् परापरव्यवहारजनकम् ? तन्न, क्षणिकत्वप्रतिषेधात् । अभ्युपगमेन तूच्यते, विशिष्टताया व्यतिरेकाभ्युपगमे विशिष्टव्यवहारजनकत्वे च संज्ञाभेदमात्रम् । अव्यतिरेकेतु

समानदेशावस्थितपिण्डे समानवयसि च परापरव्यवहारः स्यात्, द्रव्यसद्भावस्याविशेषात् । अतः परापरव्यवहारे रूपादिविलक्षणं निमित्तमस्तीति ज्ञातम् ।

तद् द्विविधं कारणभेदादित्याह * दिक्कृतं कालकृतञ्च * इति । ननु दिक्कालयोः सर्वोत्पत्तिमतां निमित्तिकारणत्वाभिधानाद् विशेषाभिधानासम्भव एव ? न, दिक्कालपिण्डसंयोगयोस्तच्छब्दवाच्यत्वेन तत्कृतत्वोपपत्तेर्दिकपिण्डसंयोगकृतं दिक्कृतम्, कालपिण्डसंयोगकृतञ्च कालकृतमिति । तथानयोः परस्परं भेदमाह * तत्र दिक्कृतं देशविशेषप्रत्यायकम् * इति । देशविशेषः प्रत्यायकोऽस्येति, देशविशेषं वा प्रत्याययतीति कालकृताद् भिद्यते । * कालकृतञ्च वयोभेदप्रत्यायकम् * इति । वयोभेदः प्रत्यायको यस्येति वयो भेदप्रत्यायकम्, वयोभेदं वा प्रत्याययतीति दिक्कृताद् भिद्यते ।

**तत्र दिक्कृतस्योत्पत्तिरभिधीयते । कथम् ? एकस्यां दिश्यवस्थितयोः पिण्डयोः संयुक्तसंयोगबह्वल्पभावे सति एकस्य द्रष्टुः सन्निकृष्टमवधिं कृत्वा 'एतस्माद् विप्रकृष्टोऽयम्' इति परत्वाधारेऽसन्निकृष्टा बुद्धिरुत्पद्यते । ततस्तामपेक्ष्य परेण दिक्प्रदेशेन संयोगात् परत्वस्योत्पत्तिः ।**

**तथा विप्रकृष्टञ्चावधिं कृत्वा 'एतस्मात् सन्निकृष्टोऽयम्' इत्यपरत्वाधारे इतरस्मिन् सन्निकृष्टा बुद्धिरुत्पद्यते । ततस्तामपेक्ष्य अपरेण दिक्प्रदेशेन संयोगाद् अपरत्वस्योत्पत्तिः ।**

*तत्र दिक्कृतस्योत्पत्तिरभिधीयते * । * कथम् * इत्यव्युत्पन्नप्रश्नानन्तरमाह * एकस्यां दिश्यवस्थितयोः पिण्डयोः * इत्यादि । पिण्डयोरिति समवायिकारणनिर्देशः । एकस्यां दिश्यवस्थितयोः, न विभिन्नदिश्यवस्थितयोरिति नियमप्रतिपादनम् । * संयुक्तसंयोगबह्वल्पभावे सति * इति भूप्रदेशान् अधिकृत्य । एतत्संयुक्तेन सह संयोगास्तेषां बह्वल्पभाव इति एकस्मिन् पिण्डेसंयुक्तसंयोगाल्पीयस्त्वम्, अन्यस्मिंस्ततो बहुत्वम् । तस्मिन् सति * एकस्य द्रष्टुः * न विभिन्नस्य । * सन्निकृष्टमवधिं कृत्वा एतस्माद् विप्रकृष्टोऽयमिति

परत्वाधारे * उत्पत्स्यमानपरत्वे । * बुद्धिरुत्पद्यते, तामपेक्ष्यपरेण दिक्प्रदेशेन-संयोगात् * परत्वोत्पत्तिरिति । दिक्प्रदेशयोः परापरव्यपदेशस्तत्सम्पादकत्वादुपचारेण ।

विप्रकृष्टञ्च पिण्डमवधिं कृत्वा इतरस्मिन् पिण्डसंयुक्तसंयोगाल्पीयस्त्वान्निमित्तात् सन्निकृष्टा बुद्धिरुत्पद्यते । तां सन्निकृष्टां बुद्धिमपेक्ष्य अपरेण दिक्प्रदेशेन योगाद् परत्वोत्पत्तिरिति । पिण्डः समवायिकारणम्, दिक्पिण्डसंयोगोऽसमवायिकारणम्, विशिष्टा च बुद्धिर्निमित्तकारणमिति ।

ननु चात्र सन्निकृष्टमवधिं कृत्वा विप्रकृष्टे बुद्धिः, विप्रकृष्टञ्चावधिं कृत्वा सन्निकृष्टे बुद्धिरिति विप्रकृष्टसन्निकृष्टबुद्ध्योः परस्परापेक्षित्वाद् उभयाभावप्रसङ्गः । तन्न । निर्विकल्पकज्ञाने प्रतिभातस्यावधित्वेनाभ्युपगमात् । तथाहि, सन्निकृष्टविप्रकृष्टयोः प्रत्यक्षेणैव निर्विकल्पकावभासे सति 'एतस्मादयं सन्निकृष्टो विप्रकृष्टश्च' इति सविकल्पकं ज्ञानं भवत्येव ।

अन्ये तु निर्विकल्पावभासजनितसंस्कारजस्मृत्युपस्थापितयोः सन्निकृष्टविप्रकृष्टयोः परस्परावधिभावो घटत इति ब्रुवते । तस्मान्न परस्परापेक्षितत्वादुभयाभाव इति स्थितम् ।

**कालकृतयोरपि कथम् ? वर्तमानकालयोरनियतदिग्देश[संयुक्त]योर्युवस्थविरयो रूढश्मश्रुकार्कश्यवलिपलितादिसान्निध्ये सत्येकस्य द्रष्टुर्युवानमवधिं कृत्वा स्थविरे विप्रकृष्टाबुद्धिरुत्पद्यते । ततस्तामपेक्ष्य परेण कालप्रदेशेन संयोगात् परत्वस्योत्पत्तिः । स्थविरञ्चावधिं कृत्वा यूनि सन्निकृष्टा बुद्धिरुत्पद्यते । ततस्तामपेक्ष्य अपरेण कालप्रदेशेन संयोगाद् अपरत्वस्योत्पत्तिरिति ।**

कालकृतयोरपि परत्वापरत्वयोः कथमुत्पत्तिरित्याह * वर्तमानकालयोः * इत्यादि । वर्तमानः कालो ययोः पिण्डयोस्तौ च तथोक्तौ तयोरित्युभयत्रापि दिक्कालकृतपरत्वापरत्वयोरुत्पत्तौ नियमः । * अनियतदिग्देशयोः * इति । न नियतो दिग्देशो ययोस्तौ तथोक्तौ तयोरिति कालकृतयोरुत्पत्तावनियमोपदर्शनम् । * युवस्थविरयोः * इति वयोभेदोपदर्शनार्थम्, समानवयसि परापर-

व्यवहारादर्शनात् । [* रूढश्मश्रुकार्कश्यवलीपलितादिसान्निध्ये सति *] रूढश्मश्रु च कार्कश्यञ्च वलयश्च पलितानि च तान्यादिर्येषां तानि, तथोक्तानि, तेषां सान्निध्ये सतीति। रूढ़श्मश्रुकार्कश्यादि सान्निध्यं सन्निकृष्टबुद्धेः कारणम्, वलीपलितादिसान्निध्यञ्च विप्रकृष्टबुद्धेरिति। * एकस्य द्रष्टुः * इति। यो हि द्रष्टा परत्वापरत्वे द्रष्टुमभिवाञ्छति तस्य। * युवानमवधिं कृत्वा स्थविरे विप्रकृष्टा बुद्धिरुत्पद्यते *। तां विप्रकृष्टां बुद्धिमपेक्ष्य परेण कालप्रदेशेन योगात् परत्वस्योत्पत्तिरिति। विप्रकृष्टञ्च स्थविरमवधिं कृत्वा यूनि 'एतस्मात् स्थविरादयं सन्निकृष्टः' इति सन्निकृष्टा बुद्धिरुत्पद्यते। * तामपेक्ष्य अपरेण कालप्रदेशेन [सं] योगाद् अपरत्वस्योत्पत्तिरिति * । सन्निकृष्टविप्रकृष्टपिण्डयोः समवायिकारणत्वम्, कालपिण्डयोः संयोगस्य चासमवायिकारणत्वम्, सन्निकृष्टविप्रकृष्टबुद्ध्योश्च निमित्तकारणत्वमिति।

ननु चायुक्तमेतत् आहारोपयोगे सति पाकजोत्पत्तिन्यायेनैकस्मिन्नहन्युपजातत्वाविशेषेण सन्निकृष्टविप्रकृष्टबुद्ध्योरभावात् परत्वापरत्वयोरसम्भवः। नैतदेवम्। जन्मनः प्रभृति एकस्यां शरीरसन्ततावादित्यपरिवर्तनापेक्षया तदुपपत्तेः। तथाहि, एकस्य जनुःप्रभृति भूयांस्यादित्यपरिवर्तनानि अपरस्याल्पीयांसीति तदपेक्षया सन्निकृष्टविप्रकृष्टबुद्ध्योर्भावः। स्थविरे भूयांस्यादित्यपरिवर्तनानीति विप्रकृष्टबुद्धिः, यूनि चाल्पीयांसीति सन्निकृष्टबुद्धिः। तदपेक्षया परत्वापरत्वयोरुत्पत्तिरिति शरीरसन्तानस्यादित्यपरिवर्तनापेक्षया घटत एवैतत्। दिक्कृतपरत्वापरत्ववैलक्षण्यञ्चानयोर्निमित्तान्तरासम्भवे सति कालकृतत्वमिष्टम्। न हि तस्मादेव निमित्ताद् व्यतिकरः सम्भवतीति।

तदेवं परत्वापरत्वयोरुत्पादे व्यवस्थिते सूत्रेणाभिसम्बन्धोपदर्शनञ्च। तथा च सूत्रम् "एकदिक्कालाभ्यां सन्निकृष्टविप्रकृष्टाभ्यां परमपरञ्च" (वै० सू०) इति। एका दिक् कालश्च ययोस्तौ तथोक्तौ ताभ्यामिति समवायिकारणनिर्देशः। एकदिग्भ्यामिति दिक्कृतपरत्वापरत्वापेक्षयैव नियमः। एककालाभ्यां वर्त्तमानकालाभ्याम् उभयत्रापीति। न हि असद्भ्यां सदसद्भ्याञ्च परत्वापरत्वे जायेते। सन्निकृष्टविप्रकृष्टाभ्यामिति समवायिकारणोपसर्जनतया सन्निकृष्टविप्रकृष्टबुद्ध्योर्निमित्तकारणत्वमुक्तमेव। तथाहि,

"परमपरञ्चेति बुद्ध्यपेक्षम्" [ वै० सू० ] इत्यपेक्षाशब्दश्चात्र कारणे वर्त्तत इति । "कारणपरत्वात् कारणापरत्वाच्च परत्वापरत्वे" (वै० सू०) इत्यसमवायिकारणं दर्शयति ।

ननु च कारणपरत्वात् कारणापरत्वाच्च यदि कार्ये परत्वापरत्वे भवतस्तर्हि रूपादिवच्चिरोत्पन्नत्वात् सन्निकृष्टविप्रकृष्टबुद्धिं विनापि समाने देशे समाने वयसि च पिण्डे तयोर्ग्रहणं स्यात्, न चैतदस्ति । अथ अनभिव्यक्तितोऽनुपलब्धिः ? तन्न, सद्भावे प्रमाणाभावात् । सन्निकृष्टविप्रकृष्टबुद्ध्यादिसद्भावे चेदानीमुत्पन्नमात्रस्यापि ग्रहणमुपपद्यत एव । तस्माद् दिक्पिण्डसंयोगः कालपिण्डसंयोगश्च परत्वापरत्वसम्पादकत्वादुपचारेण परत्वापरत्वे इत्यभिधीयेते । न च परत्वापरत्वयोः परस्परापेक्षितत्वाद् असम्बद्धमुत्पत्त्यादिनिरूपणमिति वाच्यम्, सर्वत्र परस्परापेक्षितत्वानुपलब्धेः । तथाहि, न बीजाङ्कुरयोः परस्परापेक्षित्वम्, बीजविनाशे सति कालान्तरे द्व्यणुकादिप्रक्रमेण अङ्कुरस्योत्पत्तेः । एवमङ्कुरविनाशे सति उत्तरोत्तरकार्याणां पूर्वपूर्वविनाशे सति भावात्, नाङ्कुराद् बीजमिति परस्परापेक्षित्वाभावः । तथा पितृपुत्रयोः धर्मशरीरयोश्च न परस्परापेक्षित्वं, यत एवोपलब्धिस्तत्कारणत्वानुपलब्धेः । कार्यान्तरे तु कारणत्वं न प्रतिषिध्यते इत्यलमतिप्रसङ्गेन ।

**विनाशस्त्वपेक्षाबुद्धिसंयोगद्रव्यनाशात् । अपेक्षाबुद्धिविनाशात् तावदुत्पन्ने परत्वे यस्मिन् काले सामान्यबुद्धिरुत्पन्ना भवति ततोऽपेक्षाबुद्धेर्विनश्यत्ता, सामान्यतज्ज्ञानतत्सम्बन्धेभ्यः परत्वगुणबुद्धेरुत्पद्यमानतेत्येकः कालः । ततोऽपेक्षाबुद्धेर्विनाशो गुणबुद्धेश्चोत्पत्तिः, ततोऽपेक्षाबुद्धिविनाशाद् गुणस्य विनश्यत्ता, गुणज्ञानतत्सम्बन्धेभ्यो द्रव्यबुद्धेरुत्पद्यमानतेत्येकः कालः । ततो द्रव्यबुद्धेरुत्पत्तिर्गुणस्य विनाश इति ।**

तदेवं परत्वापरत्वयोरुत्पत्तिमत्त्वादवश्यं विनाश इति, तस्य सहेतुकत्वात् कारणं वाच्यमित्याह * विनाशस्त्वपेक्षाबुद्धिसंयोगद्रव्यविनाशात् * इति त्रेधा, त्रितयविनाशाच्चापरः पक्ष इति सप्तधा विनाशः ।

तत्रापेक्षाबुद्धिविनाशात् तावद् विनाशमाह * उत्पन्ने परत्वे * स्वकारणाद्

विशेषणत्वात् पूर्वं तत्संयुक्तसमवेतसमवायात् सामान्यबुद्धिरुत्पद्यते। सा च यस्मिन् काले समुत्पन्ना भवति तदैव तत्सामान्यज्ञानात् * अपेक्षाबुद्धेर्विनश्यत्ता * विनाशकारणसान्निध्यम्। * सामान्यतज्ज्ञानतत्सम्बन्धेभ्यः परत्वगुणबुद्धेरुत्पद्यमानता * उत्पत्तिकारणसान्निध्यमित्येकः कालः। ततोऽपेक्षाबुद्धेर्विनाशो गुणज्ञानस्योत्पादोऽपेक्षाबुद्धिविनाशाद् गुणस्य विनश्यत्ता, सामान्यज्ञानस्य विनश्यत्ता, गुणश्च तज्ज्ञानञ्च तत्सम्बन्धश्चेति तेभ्यो द्रव्यबुद्धेरुत्पद्यमानतेत्येकः कालः। ततो द्रव्यबुद्धेरुत्पत्तिरपेक्षाबुद्धिविनाशाद् गुणस्य च विनाशोऽन्यस्य विनाशकारणस्यानुपलब्धेः।

**संयोगविनाशादपि कथम्? अपेक्षाबुद्धिसमकालमेव परत्वापरत्वाधारे कर्मोत्पद्यते, तेन कर्मणा दिक्पिण्डविभागः क्रियते, अपेक्षाबुद्धितः परत्वस्योत्पत्तिरित्येकः कालः। ततः सामान्यबुद्धेरुत्पत्तिर्दिक्पिण्डसंयोगस्य च विनाशः। ततो यस्मिन् काले गुणबुद्धिरुत्पद्यते तस्मिन्नेव काले दिक्पिण्डसंयोगविनाशाद् गुणस्य विनाशः।**

संयोगविनाशादपि कथं विनाश इत्यव्युत्पन्नप्रश्नानन्तरमाह * अपेक्षाबुद्धिसमकालमेव परत्वापरत्वाधारे कर्मोत्पद्यते * विभागपरत्वापरत्वयोरुत्पद्यमानतेत्येकः कालः। ततः * तेन कर्मणा दिक्पिण्डविभागः क्रियते * परत्वस्य चोत्पत्तिः, सामान्यबुद्धेरुत्पद्यमानता, दिक्पिण्डसंयोगस्य विनश्यत्ता। * ततः सामान्यबुद्धेरुत्पत्तिर्दिक्पिण्डसंयोगस्य च विनाशः * सामान्यज्ञानादपेक्षाबुद्धेर्विनश्यत्ता, गुणबुद्धेरुत्पद्यमानता, संयोगविनाशाद् गुणस्य विनश्यत्ता। * ततो यस्मिन् काले गुणबुद्धिरुत्पद्यते तस्मिन्नेव काले * दिक्पिण्डसंयोगस्य असमवायिकारणस्य विनाशाद् *गुणस्य* परत्वस्य विनाशः। (सामान्यज्ञानादपेक्षाबुद्धेरपि विनाशः। अत एवापेक्षाबुद्धिविनाशो गुणविनाशस्य कारणं समकालत्वात्।[1])

**द्रव्यविनाशादपि कथम्? परत्वाधारावयवे कर्मोत्पन्नं यस्मिन्नेव कालेऽवयवान्तराद् विभागं करोति तस्मिन्नेव कालेऽपेक्षाबुद्धिरुत्पद्यते।**

१. प्रकरणसङ्गत्यभावात् पङ्क्तिरियमत्र न सङ्गच्छते पूर्वंप्रकरण एवासीदित्यनुमीयते।

**ततो विभागाद् यस्मिन्नेव काले संयोगविनाशस्तस्मिन्नेव काले परत्वमुत्पद्यते । ततः संयोगविनाशाद् द्रव्यविनाशस्तद्विनाशाच्च तदाश्रितस्य गुणस्य विनाशः ।**

द्रव्यविनाशादपि कथं विनाश इत्याह *परत्वाधारावयवे कर्मोत्पन्नम्* यस्मिन् कालेऽवयवान्तरविभागं द्रव्यारम्भकसंयो [ गिन ? गविरोधिन ] मारभते संयोगस्य विनश्यत्ता । तस्मिन्नेव काले स्वकारणादपेक्षाबुद्धिरुत्पद्यते, परत्वस्योत्पद्यमानता । विभागाद् यस्मिन् काले संयोगस्य द्रव्यारम्भकस्य विनाशो द्रव्यस्य विनश्यत्ता तस्मिन्नेव काले परत्वमुत्पद्यते । तत्सामान्यज्ञानस्योत्पद्यमानता, ततः संयोगविनाशाद् द्रव्यविनाशः, सामान्यज्ञानस्योत्पादोऽपेक्षाबुद्धेर्विनश्यत्ता, परत्वगुणस्यापि विनश्यत्ता । ततो द्रव्यविनाशात् तदाश्रितस्य गुणस्य विनाशः । सामान्यज्ञानादपेक्षाबुद्धेश्च विनाश इति पूर्वकालत्वादाश्रयविनाश एव गुणविनाशे कारणमिति ।

**द्रव्यापेक्षाबुद्ध्योर्युगपद् विनाशादपि कथम् ? यदा परत्वाधारावयवे कर्मोत्पद्यते तदैवापेक्षाबुद्धिरुत्पद्यते, कर्मणा चावयवान्तराद् विभागः क्रियते, परत्वस्योत्पत्तिरित्येकः कालः । ततो यस्मिन्नेव कालेऽवयवविभागाद् द्रव्यारम्भकसंयोगविनाशस्तस्मिन्नेव काले सामान्यबुद्धिरुत्पद्यते । तदनन्तरं संयोगविनाशाद् द्रव्यविनाशः, सामान्यबुद्धेश्चापेक्षाबुद्धिविनाश इत्येकः कालः । ततो द्रव्यापेक्षाबुद्ध्योर्विनाशात् परत्वस्य विनाशः ।**

द्रव्यापेक्षाबुद्ध्योर्युगपद् विनाशादपि कथं परत्वापरत्वयोर्विनाशस्तदाह *यदा* परत्वाधारस्योत्पत्स्यमानपरत्वस्यावयवे कर्मोत्पद्यते विभागस्योत्पद्यमानता तदैवापेक्षाबुद्धिरुत्पद्यते, परत्वस्योत्पद्यमानता, कर्मणा चावयवान्तराद् द्रव्यारम्भकसंयोगविरोधिविभागः, संयोगस्य विनश्यत्ता, परत्वस्योत्पत्तिस्तत्सामान्यज्ञानस्योत्पद्यमानतेत्येकः कालः । *ततो यस्मिन्नेव काले* विभागाद् द्रव्यारम्भकसंयोगविनाशो द्रव्यस्य विनश्यत्ता, *तस्मिन्नेव काले सामान्यबुद्धिरुत्पद्यते* । अपेक्षाबुद्धेर्विनश्यत्ता । *तदनन्तरं संयोगविनाशाद् द्रव्यविनाशः, सामान्यबुद्धेश्चापेक्षाबुद्धिविनाशः*

गुणस्य विनश्यत्तेत्येकः कालः । *ततो द्रव्यापेक्षाबुद्ध्योर्विनाशात्* तदाश्रितस्य *परत्वस्य विनाशः* इति । एकैकस्यान्यत्र गुणविनाशे सामर्थ्यावधारणादुभयोरत्र पूर्वकालभावित्वे सति कारणत्वं निश्चीयते ।

**द्रव्यसंयोगविनाशादपि कथम् ? यदा परत्वाधारावयवे कर्मोत्पन्नम् अवयवान्तराद् विभागं करोति तस्मिन्नेव काले पिण्डकर्मापेक्षाबुद्ध्योर्युगपदुत्पत्तिः । ततो यस्मिन्नेव काले परत्वस्योत्पत्तिस्तस्मिन्नेव काले विभागाद् द्रव्यारम्भकसंयोगविनाशः, पिण्डकर्मणा दिक्पिण्डस्य च विभागः क्रियत इत्येकः कालः । ततो यस्मिन्नेव काले सामान्यबुद्धिरुत्पद्यते तस्मिन्नेव काले द्रव्यारम्भकसंयोगविनाशात् पिण्डविनाशः, पिण्डविनाशाच्च पिण्डसंयोगविनाशः । ततो गुणबुद्धिसमकालं पिण्डदिक्पिण्डसंयोगविनाशात् परत्वस्य नाशः ।**

संयोगद्रव्यविनाशादपि कथं परत्वापरत्वयोर्विनाश इत्याह *यदा* द्रव्यावयवे [? परत्वाधारावयवे] कर्मोत्पन्नमवयवान्तराद् विभागं करोति संयोगस्य विनश्यत्ता, तस्मिन्नेव काले पिण्डेऽपि समवायिकारणे कर्म चापेक्षाबुद्धिश्च स्वकारणात् तयोर्युगपदुत्पत्तिः, दिक्पिण्डविभागपरत्वापरत्वयोरुत्पद्यमानतेत्येकः कालः । ततो यस्मिन्नेव काले परत्वमुत्पद्यते तत्सामान्यज्ञानस्योत्पद्यमानता, तस्मिन्नेव कालेऽवयवविभागाद् द्रव्यारम्भकसंयोगविनाशः, द्रव्यस्य विनश्यत्ता, पिण्डकर्मणा च दिक्पिण्डविभागः क्रियते, संयोगस्य विनश्यत्तेत्येकः कालः । ततो यस्मिन्नेव काले सामान्यबुद्धिरुत्पद्यते गुणबुद्धेरुत्पद्यमानता, अपेक्षाबुद्धेर्विनश्यत्ता, तत्समकालं संयोगविनाशात् पिण्डविनाशः, विभागाच्च दिक्पिण्डसंयोगविनाशः, गुणस्य विनश्यत्ता । ततो गुणबुद्धिसमकालं पिण्डसंयोगयोर्विनाशात् परत्वस्य विनाशः, सामान्यबुद्धेश्चापेक्षाबुद्धिविनाश इति । अतएव समकालत्वादपेक्षाबुद्धिविनाशो न कारणम्, पिण्डसंयोगविनाशयोश्चान्यत्र सामर्थ्यावधारणे सति पूर्वकालभावित्वात् कारणत्वमिति ।

**संयोगापेक्षाबुद्ध्योर्युगपद् विनाशादपि कथम् ? यदा परत्वमुत्पद्यते तदा परत्वाधारे कर्म, ततो यस्मिन्नेव काले परत्वसामान्यबुद्धिरुत्पद्यते**

**तस्मिन्नेव काले पिण्डकर्मणा दिक्पिण्डविभागः क्रियते । ततः सामान्यबुद्धितोऽपेक्षाबुद्धिविनाशो विभागाच्च दिक्पिण्डसंयोगविनाश इत्येकः कालः । ततः संयोगापेक्षाबुद्ध्योर्विनाशात् परत्वस्य विनाशः ।**

संयोगापेक्षाबुद्ध्योर्युगपद् विनाशादपि कथं विनाश इत्याह *यदा परत्वमुत्पद्यते* स्वकारणपरत्वसामान्यज्ञानस्योत्पद्यमानता, *तदा परत्वाधारे* स्वकारणात् कर्म, विभागस्योत्पद्यमानता, *ततो यस्मिन्नेव काले परत्वसामान्यबुद्धिरुत्पद्यते* गुणबुद्धेरुत्पद्यमानता, अपेक्षाबुद्धेर्विनश्यत्ता, *तस्मिन्नेव काले पिण्डकर्मणा दिक्पिण्डविभागः क्रियते* तत्संयोगस्य विनश्यत्ता । *ततः सामान्यबुद्धितोऽपेक्षाबुद्धिविनाशो विभागाच्च दिक्पिण्डसंयोगविनाशः* गुणस्य विनश्यत्तेत्येकः कालः । *ततः संयोगापेक्षाबुद्ध्योर्विनाशात् परत्वस्य विनाशः* इति ।

**त्रयाणां समवाय्यसमवायिनिमित्तकारणानां युगपद् विनाशादपि कथम् ? यदापेक्षाबुद्धिरुत्पद्यते तदा पिण्डावयवे कर्म, ततो यस्मिन्नेव काले कर्मणावयवान्तराद् विभागः क्रियतेऽपेक्षाबुद्धेः परत्वस्य चोत्पत्तिस्तस्मिन्नेव काले पिण्डेऽपि कर्म, ततोऽवयवविभागात् पिण्डारम्भकसंयोगविनाशः, पिण्डकर्मणा च दिक्पिण्डविभागः क्रियते, सामान्यबुद्धेश्चोत्पत्तिरित्येकः कालः । ततः संयोगविनाशात् पिण्डविनाशः, विभागाच्च दिक्पिण्डसंयोगविनाशः, सामान्यज्ञानादपेक्षाबुद्धेर्विनाश इत्येतत् सर्वं युगपत्, त्रयाणां समवाय्यसमवायिनिमित्तकारणानां विनाशात् परत्वस्य विनाश इति ।**

त्रयाणां समवाय्यसमवायिनिमित्तानां युगपद् विनाशादपि कथं विनाश इत्याह *यदापेक्षाबुद्धिरुत्पद्यते* परत्वस्योत्पद्यमानता । *तदा पिण्डावयवे कर्म* विभागस्योत्पद्यमानता । ततो यस्मिन्नेव कालेऽवयवान्तराद् द्रव्यारम्भकसंयोगविरोधिविभागः क्रियते, अवयवकर्मणा संयोगस्य विनश्यत्ता, परत्वस्योत्पत्तिः, तत्सामान्यज्ञानस्योत्पद्यमानता, तस्मिन्नेव काले स्वकारणात् पिण्डेऽपि कर्म, विभागस्योत्पद्यमानता, ततो विभागात् पिण्डारम्भकसंयोगविनाशः, पिण्डस्य विनश्यत्ता, पिण्डकर्मणा च विभागः क्रियते ।

दिक्पिण्डसंयोगस्य विनश्यत्ता सामान्यबुद्धेश्चोत्पत्तिः, अपेक्षाबुद्धेर्विनश्यत्ता, गुणबुद्धेरुत्पद्यमानतेत्येकः कालः। ततः संयोगविनाशात् पिण्डविनाशः, विभागाच्च दिक्पिण्डसंयोगविनाशः, सामान्यज्ञानादपेक्षाबुद्धेर्विनाश इत्येतत् सर्वं युगपद् भवतीति। तत्र त्रयाणां समवाय्यसमवायिनिमित्तानां विनाशात् परत्वस्य विनाश इति। अन्यत्र हि व्यस्तानां कारणत्वोपलब्धेः समुदितानामत्र सम्भवाद् गुणविनाशे कारणत्वमिति सम्भाव्यमानानेककारणत्वोपन्यासः।

**बुद्धिवैधर्म्यम्**

**बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्यायाः ।**

अथेदानीं बुद्धेरवसरप्राप्ताया लक्षणपरीक्षार्थं * बुद्धिरुपलब्धिः * इत्यादि प्रकरणम्। बुद्धिरिति पदम् आवर्त्त्यमानं लक्ष्यनिर्देशो लक्षणनिर्देशश्च भवति। तथाहि, बुद्धिरिति लक्ष्यनिर्देशः। बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्याया लक्षणम्।

अथ आकाशे [पर्यायशब्दरूपत्वात्] वर्तमानाः कथं व्यधिकरणत्वात् बुद्धेर्लक्षणम्? वाच्यवाचकभावेन तद्धर्मत्वात्। लक्षणवैचित्र्यज्ञापनार्थञ्चात्र पर्यायलक्षणाभिधानम्। तथाहि, न परम् असाधारणत्वात् कार्यकरणादिर्लक्षणम् पर्यायात्मकञ्चेति।

अथ शब्दानां पुरुषेच्छानुविधायितया अर्थान्तरेऽपि वृत्तिः सम्भवतीति व्यभिचारः? न, अनादिकालप्रवाहायातत्वेन विशेषितत्वात्। तथाहि, बुद्धिरितरस्माद् भिद्यते, अनादिकालप्रवाहायातेत्थम्भूतपर्यायाभिधेयत्वात्, यस्त्वितरस्मान्न भिद्यते न चासावेवम्, यथा रूपादिरिति। व्यवहारो वा साध्यः।

ननु बुद्धेरन्येऽपि पर्याया विद्यन्त इति तत्परिहारेणामीषामेव लक्षणत्वेनाभिधाने विशेषहेतुर्वक्तव्यः। स चायं विशेषोऽत्रैव विप्रतिपत्तेः, लक्षणार्थमपीदं वाक्यं सामर्थ्यात् तन्निरासपरं भवतीति।

तथा च सांख्याः, प्रधानस्याद्यो विकारो बुद्धिः, बीजस्योच्छूनतेव।

प्रधानञ्च सत्त्वरजस्तमसां साम्यावस्था, तद्विकारो वैषम्यम्। उपलब्धिस्तु सुखदुःखाकारपरिणतायां बुद्धावात्मनः प्रतिबिम्बोदयो भोगः। तदाह,

विविक्तदृक्परिणतौ बुद्धौ भोगोऽस्य कथ्यते।
प्रतिबिम्बोदयः स्वच्छे यथा चन्द्रमसोऽम्भसि ॥(आसुरिः)इति।

विविक्तदृग्विषयाकारपरिणतेन्द्रियाकारपरिणतिर्यस्याः सा तथोक्ता, तस्यां बुद्धौ सत्यामात्मनो भोगः कथ्यते। किं रूपः ? प्रतिबिम्बोदयः, न वास्तवः। यथा चन्द्रमसः प्रतिबिम्बनं स्वच्छे, न कलुषाम्भसि; एवं विशिष्ट-परिणामोपचितायां बुद्धावात्मन इति। वास्तवे हि भोगे पुरुषस्य पूर्वस्वरूप-निवृत्तौ स्वरूपान्तरापत्तिर्विकारः स्यात्। तत्र चाचेतनत्वादनेकदूषणमिति।

अन्ये त्वन्यथा भोगं मन्यन्ते। यथा हि,

पुरुषोऽविकृतात्मैव स्वनिर्भासेन चेतनम्।
मनः करोति सान्निध्यादुपाधिस्फटिकं यथा ॥(विन्ध्यवासी)इति।

सान्निध्यादुपाधिस्फटिकमतद्रूपं स्वनिर्भासं स्वाकारं करोति। एवमयं पुरुषोऽविकृतस्वरूपोऽचेतनं मनः स्वनिर्भासं चेतनमिव करोति सान्निध्यात्, न पुनर्वस्तुतस्तस्य चैतन्यं विकारित्वात्। ज्ञानन्तु विषयाकारपरिणतेन्द्रिया-कारतया बुद्धेः परिणामः। तदा भोगोत्सुकं पुरुषं मत्वा बुद्धेराकूतिः सम्पद्यते। तदाकूतसंवेदनाच्चेन्द्रियाणां पूर्वस्वरूपनिवृत्तेर्विषयाकारपरिणामः। अन्यथा हि पूर्वरूपापरित्यागे प्रागिव पश्चादपि विषयावबोधो न स्यात्। विषयाकारपरिणामश्च प्रतिकर्मव्यवस्थातो नीलस्येदं पीतस्येदमिति ज्ञेयम्। अन्यथा हि विषयाकारं विना परिणामस्याविशेषादियं व्यवस्था न स्यात्। एवं विषयाकारपरिणतेन्द्रियेषु तदाकारतया बुद्धेः परिणामः।

तथासिद्ध्यादिप्रत्ययाः पञ्चाशद् बुद्धेः परिणामविशेषा एव।

अष्टधा सिद्धिर्नवधा तुष्टिः पञ्चविपर्ययभेदाः।
तथाशक्तिरष्टाविंशतिधेत्यसिद्धितुष्ट्योर्भेदाः ॥

सप्तदशैकादशेन्द्रियवधाश्चेति पञ्चाशद् भवन्तीति पर्यायत्वं बुद्ध्यादि-शब्दानां न सिद्धाः, विभिन्नार्थवाचकत्वात्। अभिन्नप्रवृत्तिनिमित्ताश्चैकार्थ-वाचकाः शब्दाः पर्याया इति।

तदेतदसाम्प्रतम्, एषां प्रयोगतः पर्यायताप्रतीतेः। तथाहि, बुद्धः, उपलब्धः, ज्ञातः, प्रतीतः, इत्येकस्मिन्नर्थे प्रयुज्यमानाः प्रतीयन्ते। विभिन्नार्थतायान्तु उपलब्धो न बुद्धः, ज्ञातो न प्रतीत इति संवेदनं स्यात्। न चैतदस्ति। न च प्रधानासत्त्वस्य वक्ष्यमाणत्वात् तद्विकारस्य बुद्धेः सद्भावः। तदभावादात्मनि बुद्धेर्न बिम्बनम्, उपलब्धिस्तत्परिणामो वा, ज्ञानं, प्रत्ययश्चेति। यदि न वास्तवो भोगः स्यात्, न संसार्यात्मनो मुक्ताद् विशेषः, स्वनिष्ठायाश्चितेरुभयत्राविशेषात्।

न च व्यापित्वाविशेषात् संसार्यात्मन एव बुद्धेर्विशेषेण सान्निध्यात् प्रतिबिम्बनं नेतरस्येति वाच्यम्। भोग्यभोक्तृत्वसम्बन्धस्तु भोगस्यावास्तवत्वाद् विचार्यः। न च कर्मैव नियामकम्, तस्य बुद्ध्या सम्पादित्वात्। तथाहि, बुद्ध्या सम्पादितं कर्म पुरुषेण विशिष्टसम्बन्धाभावाद् अशेषपुरुषोपभोग्यं स्यात्। न च बुद्धेः कर्त्तृत्वम्, अचेतनत्वात्। चैतन्यं हि [प्रधानं ? न] क्रियाकरणे वर्त्तत इति। कर्त्तृत्वं हि स्वातन्त्र्यम् [तत्र] करणत्वं पारतन्त्र्यं न स्यात्, स्वातन्त्र्यपारतन्त्र्योर्विधिप्रतिषेधरूपत्वादिति पुरुषस्यैव कर्तृत्वमभ्युपेयम्। न च तस्य पूर्वमकृत्वा कुर्वतः परिणामित्वम्, कारकसाकल्ये कार्यकरणात्, तद्वैकल्ये चाकरणात्। साकल्यवैकल्ययोश्चाविर्भावतिरोभावाभ्यां नात्मनस्तथाभावस्ततोऽन्यत्वात्। अतः पुरुषस्य कर्त्तृत्वे युक्तं वास्तवं भोक्तृत्वम्। अन्यथा हि भोगक्रियामकुर्वतः कथमुदासीनस्य भोक्तृत्वं स्यात्, भोगस्य सुखदुःखवेदनारूपत्वात्। तदाधारता तु भोक्तृत्वमिति।

यच्चेदं पुरुषस्य भोगोत्सुकतां मन्यमानाया बुद्धेराकूतिः सम्पद्यते, तत्संवेदनाच्चेन्द्रियाणामिति, असदेतत्, अचेतनत्वात्। अचेतना हि बुद्धिस्तथेन्द्रियाणि, तेषामाकूतसंवेदनाभावे कथं नियतो विषयाकारतया परिणामः? पुरुषस्य तु चिद्रूपताव्यतिरेकेण नापरा भोगोत्सुकतास्ति। यश्चायमिन्द्रियाणां विषयाकारपरिणामस्तस्य विषयाकारतायां न प्रतिकर्मव्यवस्था प्रमाणम्, तदन्तरेणापि तद्भावात् इति वक्ष्यमाणन्यायात्। यदि च बुद्धेः पूर्वरूपनिवृत्ताविन्द्रियाकारतया परिणामस्तर्हि स्वरूपस्याव्यतिरेकाद् बुद्धेरेवोत्पत्तिर्निवृत्तिश्चेति। अन्यत्वे प्रतिसन्धानाद्यभाव एव। न ह्येकेनोप-

लब्धमर्थमन्यः प्रतिसन्धातुमर्हतीति। परिणामास्तु बुद्धेस्तादात्म्येन वर्तन्त इति तेषामनेकत्वे बुद्धेरप्यनेकत्वम्, विपर्यये तादात्म्यविरहात्।

यदपीदं बुद्धेः परिणामविशेषाः पञ्चाशत् प्रत्ययाः, तदबुद्धिपूर्वकम्, तत्परिणामविशेषानामानन्त्यात्। न च तेषामेष्वेवान्तर्भावः प्रतिनियतलक्षणावरोधस्यानुपलब्धेरित्यलमतिप्रसङ्गेन।

**सा चानेकप्रकारा, अर्थानन्त्यात् प्रत्यर्थनियतत्वाच्च।**

तदेवं बुदध्यादिपर्यायाः परपक्षव्युदासे सति लक्षणमिष्यन्त इति स्थिते लक्षणेन लक्ष्यमाणस्यैकानेकत्वोपलब्धेर्विप्रतिपत्तेश्च संशये सति तन्निरासार्थं *सा चानेकप्रकारा* इति वाक्यम्। कुत एतत्? *अर्थानन्त्यात् प्रत्यर्थनियतत्वाच्च*।

ननु चार्थानन्त्यमर्थधर्म इति व्यधिकरणत्वम्? न, अन्यथा तदनुपपत्तेः। तथाहि, बुद्धेरर्थानन्त्यमित्यर्थोपदर्शनम्, एतत्साधनञ्च अनन्तार्थत्वादिति। अर्थोऽनन्तो यस्याः सा तथोक्ता, तस्या भावोऽनन्तार्थत्वमिति। अर्थस्तु अर्थ्यतेऽनेनेति कारकसामग्र्यं न कारकैकदेशः, तद्भेदेऽपि कार्यस्याभेदोपलब्धेः। तथाहि, अनेककारकसम्पाद्यं घटादि एकं दृष्टमिति। सामग्री तु प्रतिकार्यंनियतत्वान्न तद्भेदं व्यभिचरतीति। अतोऽनेकप्रकारा बुद्धिरनन्तार्थत्वात्, अनन्तकारकसामग्रीजन्यत्वात् घटादिवदिति। यश्चैको न चासावनन्तकारकसामग्रीजन्यो यथा घट इति। न तु कर्मव्युत्पत्त्या अनन्तकर्मकारकजन्यत्वं साधनं विवक्षितमिति व्याख्येयम्, प्रत्यर्थनियतत्वादित्यनेन गतार्थत्वात्। तथाहि, अर्थमर्थं प्रति नियतं यावद्भेदभिन्नं कर्मकारकं तावद्भेदभिन्ना बुद्धय इति बुद्धिरनेकप्रकारा प्रत्यर्थनियतत्वाद् घ्राणादिवत्।

अन्ये तु पूर्वस्मिन्नेव वाक्ये कर्मव्युत्पत्त्या अनन्तकर्मकारकजन्यत्वं साधनं लभ्यत एवेति प्रत्यर्थनियतत्वं प्रत्यात्मवृत्तित्वं विवक्षितमिति मन्यन्ते। तथाहि, अर्थतेऽस्मिन्नित्यात्मा इत्यर्थः तं प्रति नियतत्वं प्रत्यात्मवृत्तित्वमेव। सामान्यस्य तु अनन्तात्मवृत्तित्वान्न प्रत्यात्मनियतत्वमस्तीति सम्भवेऽपि बुद्धेर्विशेषगुणत्वाद् विशेषगुणत्वे सतीति विशेषणमभ्यूह्यम्।

अन्ये तु रूपज्ञानं रसज्ञानमित्यादिबुद्धेर्नानात्वस्य प्रत्यक्षेणैव प्रसिद्धेरीश्वरबुद्धेरस्मद्बुद्धेश्च परस्परभेदज्ञापनार्थम् अर्थानन्त्यात् प्रत्यर्थनियतत्वाच्चेति पदद्वयमिति ब्रुवते । तथाहि, ईश्वरबुद्धिरनन्तार्थत्वादस्मद्बुद्धेर्भिद्यते, अस्मद्बुद्धिश्च प्रत्यर्थनियतत्वादीश्वरबुद्धेरिति । अत्र च बुद्धेरनेकत्वं सामान्येन प्रतिज्ञातमित्ययं विशेषः कुतो लभ्यत इति चिन्त्यम् ।

अथ बुद्धिव्यतिरेकेणार्थस्य सद्भावे प्रमाणाभावाद् अयुक्तमर्थानन्त्यं प्रत्यर्थनियतत्वञ्चेति । तथाहि, विज्ञानं स्वयम्प्रकाशरूपत्वादात्मानं प्रकाशयति, अर्थास्तु जडात्मानः, तेषां कथं प्रकाशः ? यदि ज्ञानं प्रगृहीतं प्रकाशकमिष्येत तस्यापि ज्ञानान्तरेण ग्रहणाभ्युपगमे ज्ञानपरम्परायामुपक्षीणत्वाद् अभिप्रेतस्यार्थस्याप्रकाशनमेव । न च पूर्वज्ञानाग्रहणेऽपि अर्थस्यैव ग्रहणमिति वाच्यम् । तेषामासन्नत्वे सति ग्राह्यलक्षणप्राप्तत्वात् । तदाह,

तां ग्राह्यलक्षणप्राप्तामासन्नां जनिकां धियम् ।
अगृहीत्वोत्तरं ज्ञानं गृहणीयादपरं कथम् ॥ ( प्र.वा.२।५१५ )

अथागृहीतमेवार्थप्रकाशकम् ? एवं तर्हि सन्तानान्तरोद्भूतानामपि सर्वेषां प्रकाशकं स्यात् । यथा हि, स्वसन्ततावुपजातमज्ञातमेवार्थप्रकाशकम्, एवं सन्तानान्तरेऽपि स्यादविशेषात् । अथ स्वसम्बेद्यस्वसन्ततौ विज्ञानमर्थप्रकाशकम् ? एवं तर्हि बोधशरीरादर्थान्तरस्य वस्तुनोऽप्रकाश एव । तथाहि, यद्यमी पदार्थाः प्रकाशरूपाः कथं बोधाद् व्यतिरिच्यन्ते ? बोधस्यैव तद्रूपत्वाद्, अप्रकाशरूपतया च सर्वदा न प्रकाशः स्यात् । अतो ज्ञानमेव, प्रकाशस्वरूपत्वादिति व्यवह्रियते । प्रकाशरूपतया हि सत्त्वं व्याप्तम् । सा च व्यावर्त्तमाना बाह्यार्थेभ्यः स्वव्याप्तं सत्त्वं गृहीत्वा व्यावर्त्तत इत्यसत्त्वं बोधव्यतिरेकिणाम् ।

न च बोधस्य बोधरूपतया सर्वत्राविशेषाद् विशिष्टार्थप्रकाशकत्वं स्यात् । अथ नीलस्येदं पीतस्येदमिति प्रतिकर्मव्यवस्थातः साकारं विज्ञानमिष्टम् ? तर्हि विज्ञानमेवास्तु तदाकारमलं बाह्यार्थकल्पनयेति । तदुक्तम्,

धियो नीलादिरूपत्वे बाह्योऽर्थः किंनिबन्धनः । ( प्र.वा.२।४०३ ) इति

तथा विज्ञानकालेऽर्थस्यासद्भावाद्, अर्थकाले तु ज्ञानस्येति कथं तयोर्ग्राह्यग्राहकभावः, सदसद्रूपयोस्तदभावात्। एकस्मिंश्च काले द्वयोरुत्पत्त्यभ्युपगमे किं ग्राह्यं किञ्च ग्राहकमित्यविशेषात्। न च विज्ञानार्थयोः स्वात्मन्येव पर्यवसाने अर्थाधीनतायाः प्रतिपत्तुमशक्यत्वाद् ग्राह्यग्राहकभावः। तथा अवयविप्रतिषेधद्वारेण रूपादिसमुदायमात्रम्, तच्च समुदीयमानेभ्यो नार्थान्तरमिति व्यवस्थायामर्थाभाव एव, समुदायस्य परमार्थसत्त्वेनाप्रतिभासनात्। ये तु परमार्थसन्तः परमाणवस्तेऽस्मद्दर्शनविषया न भवन्त्येव, अतीन्द्रियत्वात्। कार्यञ्चापरमार्थसत्त्वात् प्रतिभासमानमलिङ्गमेव। तस्मादनादिवासनावशाद् विज्ञानांश एव ग्राह्यग्राहकप्रविभागः। एतदाह,

अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥ (प्र.वा. २।३५४)

न तु परमार्थतः। तदाह,

नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः।
ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते ॥ (प्र.वा. २।३२७)

ननु तर्हि नीलमहं वेद्मि चक्षुषेति प्रतिभासः कथम्? तथाहि, नीलमिति कर्म, अहमीति कर्ता, वेद्मीति क्रिया, चक्षुषेति करणम्। एतेषां परस्परव्यावृत्तवपुषां प्रतिभासनाद् अभेदप्रतिपादनमुन्मत्तभाषितम्? नैतदेवम्। तैमिरिकस्य द्विचन्द्रदर्शनवदस्याप्युपपत्तेः। यथा हि, तैमिरिकस्यार्थाभावेऽपि तदाकारं विज्ञानमुदेति एवं कर्मादिष्वविद्यमानेष्वपि अनादिवासनावशात् तदाकारं विज्ञानमिति। अथ तैमिरिकस्य केशादिज्ञानं बाध्यमानत्वान्निर्विषयम्, न चैवमेतत्, तदसत्, बाध्यबाधकभावस्यैवासम्भवात्। तथाहि, न विज्ञानमर्थेन बाध्यते, प्रतीयमानाप्रतीयमानाभ्यां बाध्यत्वेऽतिप्रसङ्गात्। प्रतीयमानेन हि बाधायां सर्वं विज्ञानं बाध्यं स्यात्, एवमप्रतीयमानेनापीति।

अथ ज्ञानेनैव ज्ञानं बाध्यते, तत्रापि न विभिन्नविषयेण, रूपज्ञानेन रसादिज्ञानस्यापि बाधप्रसङ्गात्। समानविषयत्वे तु सम्पादकत्वमेव स्यान्न बाधकत्वम्। न च विज्ञानस्योत्पत्तिर्विनाशो वा बाधात्, सर्वस्यापि तथा-

भावप्रसङ्गात् । अथ विषयान्तरोपसर्पणा मिथ्यापत्तिर्बाधः ? तदसत्, विषयस्य कर्मकारकरूपत्वात्, यत्रोत्पद्यते ज्ञानं स एव तस्य विषय इति विषयान्तरोपसर्पणमसिद्धम् । विज्ञाने बाध्यबाधकसद्भावस्यैवाप्रसिद्धेर्न मिथ्याज्ञानमस्तीति । नापि संविदि सम्यक्त्वम्, प्रमाणाभावात् ।

अथ अर्थक्रियासंवादः प्रमाणम् ? न, तत्रापि संवादकापेक्षायामनवस्थाप्रसङ्गात्, संवादकञ्च विना न सम्यक्त्वसिद्धिरिति । न चार्थक्रियापि बोधाद् भिद्यते, सर्वस्यापि प्रतिभासमानस्य बोधादव्यतिरेकात् । यथोक्तम्,

प्रकाशमानस्तादात्म्यात् स्वरूपस्य प्रकाशकः ।
यथा प्रकाशोऽभिमतस्तथा धीरात्मवेदिनी ॥

(प्र. वा. २।३२९) इति ।

यदि च पदार्थानां निजं स्वरूपादि यथैकस्य प्रतिभासस्तथा सर्वेषामपीति विसंवादो न स्यात् ? न चैतदस्ति । तथाहि,

मन्त्राद्युपप्लुताक्षाणां यथा मृच्छकलादयः ।
अन्यथैवावभासन्ते तद्रूपरहिता अपि ॥ (प्र. वा. २।३५५) इति ।

अथ चोपप्लुतचक्षुषामन्यथा प्रतिभासस्तत इति किं प्रमाणम् ? अनुपप्लुतचक्षुषां तथैव दर्शनमिति । तदाह,

तथैव दर्शनात्तेषामनुपप्लुतचक्षुषाम् ।
दूरे यथा वा मरुषु महानल्पोऽपि दृश्यते ॥ (प्र. वा. २।३५६) इति ।

अव्यवस्थामेवोत्तरार्धेन दर्शयति, एवमेकशो बुद्ध्या विचार्यमाणेषु भावेषु रूपं न व्यवतिष्ठते । यथा हि, तन्तुषु विचार्यमाणेषु पटस्याव्यवस्थानम्, अंशुव्यतिरेकेण तन्तूनाम्, इत्याद्यूह्यम् । कथं तर्हि शाक्याः स्नानादिक्रियासु प्रवर्तन्ते, बाह्यार्थस्यासत्वादिति ? लोकव्यवहारानुसारितया । यथाहि, अपरीक्षका बाह्यमर्थम् अविद्यावशात् प्रतिपद्यमानाः प्रवर्तन्ते तद्वत् परीक्षका अपीति, 'लोकव्यवहारं प्रति सदृशौ बालपण्डितौ' इति न्यायात् ।

तदेतदसत्, अर्थविशेषादुत्पत्तिमन्तरेण बुद्धिविशेषस्याभावप्रसङ्गात् । रूपज्ञानं रसज्ञानमित्यादि परस्परं व्यावृत्तस्वरूपाणि ज्ञानानि प्रथन्त इत्यर्थ-

विशेषोऽभ्युपगन्तव्यः। अथ वासनाविशेषाद् विज्ञानविशेषः ? तस्या अपि विशिष्टज्ञानजनकत्वेऽपि ज्ञानाद् व्यतिरेके च संज्ञाभेदमात्रम्। अव्यतिरेके तु ज्ञानरूपोभयं सर्वत्राविशिष्टमिति रूपज्ञानं रसज्ञानमित्यादिवैचित्र्याभावः। न चाकारविशेषाद् विज्ञानविशेषः, तस्याप्यसम्भवात्। तथाहि, ज्ञानमात्रस्य वास्तवाकारतायां नीलदिज्ञानं वास्तवाकारत्वात् प्रमाणम्, द्विचन्द्रादिज्ञानञ्चावास्तवाकारत्वादप्रमाणमिति विशेषव्याघातः, वास्तवाकारतायाः सर्वत्राविशेषात्। अथावास्तवाकारम्, तथापि विशेषाभ्युपगमहानिः, वादिप्रतिवादिनोश्च जयपराजयव्यवस्था न स्यात्, उभयोरप्रमाणेन प्रवृत्तेरविशेषात्।

न चावास्तवस्य विज्ञानतादात्म्यम्, सदसद्रूपयोः खरविषाणयोरिवैकत्वादर्शनात्। अत एव,

सहोपलम्भनियमादभेदो नीलतद्धियोः।

(धर्मकीर्तेरिति प्रज्ञाकर भा० पृ० १२७)

इत्येकत्वसाधनमुन्मत्तभाषितम्। असतः सत्तादात्म्ये सत्त्वम्, असत्तादात्म्ये तु तद्रूपत्वमिति। तथा परप्रसिद्ध्या नियमेन सहोपलभ्यमानत्वं भेदेनैव व्याप्तमिति विरुद्धं स्यात्। अथ साहाय्यं यौगपद्यं वा विवक्षितं सहोपलभ्यमानत्वम् ? तथापि तयोर्भेदेनैव व्याप्तत्वाद् विरुद्धत्वम्। तथा सर्वज्ञः स्वचित्तेन सहोपलभते परचित्तम्, न च तस्य तस्मादभेद इति व्यभिचारः, सर्वेषां सर्वज्ञताप्रसङ्गात्। न चैकस्यैवोपलम्भनियमो हेतुः, अशब्दार्थत्वात्, साध्याविशिष्टत्वाच्च। तथा अनेकरूपाद्यवयवस्य हि तस्यार्थस्योपलम्भे स्वरूपासिद्धोऽपीति।

अथ बाह्यार्थाभावादेकोपलम्भनियमः ? तन्न, इतरेतराश्रयत्वप्रसङ्गात्। तथा चैकोपलम्भनियमात् बाह्यार्थाभावसिद्धिः, तत्सिद्धेश्चैकोपलम्भनियमसिद्धिरित्येकाभावादितराभावः। अथैकेनैवोपलभ्यमानत्वं साधनम् ? न, अन्यवेदनाभावस्याप्रसिद्धेः। अर्थस्तु तत्समानक्षणैरन्यैरप्युपलभ्यत इत्येकेनैवोपलभ्यमानत्वमसिद्धम्। सच्चन्द्रासच्चन्द्रदृष्टान्तो सदसतोरेकत्वविरोधात् साध्यविकलः, साधनविकलश्च, असतश्चन्द्रस्य सत्त्वेनोपलम्भाभावात्।

तथा ज्ञानं ग्राहकस्वरूपम्, नीलादि ग्राह्यस्वरूपमित्यनयोः शुक्लपीतयोरिव स्वभावभेदाद् भेदः। अभेदे हि बोधोऽपि नीलस्य ग्राह्यः, नीलञ्च बोधस्य ग्राहकमिति स्यात्। न चैतदस्ति, कारणभेदाच्च नीलाद् बोधोऽर्थान्तरम्। तथाहि, 'बोधाद् बोधरूपता', 'इन्द्रियाद् विषयप्रतिनियमः', 'विषयादाकारग्रहणम्' इति भेदादेषां भेद एव। अथ न कारणभेदः ? किं तर्हि ? व्यावृत्तिभेदमात्रम्। अबोधव्यावृत्तिर्बोधः, निराकारताव्यावृत्तिः साकारत्वम्, अतद्रूपव्यावृत्तिर्विषयप्रतिनियम इति। एवं तर्हि नीलावबोधचक्षुषामाकारबोधविषयप्रतिनियमेषु व्यावृत्तिस्वरूपेषु व्यापारासम्भवाद् अकारणत्वमेव, व्यावृत्तेरवस्तुरूपत्वात्। अथ व्यावृत्ताद् बोधादबोधादिव्यावृत्तिर्नान्या, तर्हि बोधस्यैकरूपत्वात् कारणभेदप्रतिपादनमसम्बद्धं स्यात्। अतः कारणभेदादेव नीलतद्बोधयोर्भेदः। चित्रप्रतिभासे तु नीलपीताद्यनेकाकारं विज्ञानं बोधमात्रतायां कथं स्यादिति चिन्त्यम्। तथा हि, तेषामाकाराणामेकबोधतादात्म्यादेकत्वम्, तत्तादात्म्ये वा बोधस्यानेकत्वमिति दुर्निवारः प्रसङ्गः।

अथ यावन्तस्तत्राकारास्तावन्त्येव ज्ञानानीति ? तर्हि तेषां प्रतिनियताकारत्वात् चित्रप्रतिभासाभावः। न चाकारसद्भावे प्रतिकर्मव्यवस्था प्रमाणम्, अन्यथापि भावात्। तथाहि, सकलकारकजन्यत्वाविशेषेऽपि नीलस्य कर्मरूपतया व्यापारात्तेनैव व्यपदेशो नाकारार्पकत्वादिति। सर्वेषां जनकत्वाविशेषेऽपि अर्थस्यैवाकारार्पकत्वे विशेषहेतुर्वाच्यः। अथार्थस्य कर्मरूपतया व्यापारात् तस्यैवाकारार्पकत्वम् ? तर्हि कर्मरूपतैवास्तु व्यपदेशनियमे हेतुः, किमाकारेणासम्भविना कल्पितेनेति। तथाहि, नीलादेरसाधारणाकारार्पकत्वे बोधरूपता न स्यात्, साधारणाकारार्पकत्वे तु प्रतिकर्मव्यवस्थाभाव इति।

अथ समारोपिताकारं विज्ञानमिति नायं दोषः ? तदसत्, आत्मनोऽवस्थितस्याभावे कथं ज्ञानात्मनि आकारः समारोप्यते। न तावदनुत्पन्नस्य विनष्टस्य वा समारोपकत्वम्। न चोत्पत्तिसमकालम्, आत्मलाभकाले समारोपणे व्यापारासम्भवात्। तस्मादाकारसद्भावे प्रमाणाभावादर्थविशेषादेवायं विशेष इति युक्तम्।

अथाप्रकाशस्वरूपत्वादर्थानां क[मं?थं]प्रकाशः ? तद्विषयज्ञानोत्पाद एव । तथाहि, यस्मिन् विषये ज्ञानमुत्पन्नं स एवोपलब्धो नेतर इति विषयविषयिभावस्य नियामकत्वम्, अतो ज्ञानमर्थप्रकाशो न तु प्रकाशकमिति । किं गृहीतमर्थप्रकाशकमुत अगृहीतमित्यादिविकल्पः परमतास्पर्शी, चक्षुरादेः कारकजातस्यार्थप्रकाशकत्वाभ्युपगमात् । यत्र च ज्ञानं विशेषलिङ्गं वा तत्र गृहीतस्यार्थपरिच्छेदे व्यापारोऽभ्युपगम्यत एव । तस्य च आत्मान्तःकरणसम्बन्धाद् ग्रहणम्, नावश्यम् तत्रापि ज्ञानान्तरमित्यनवस्थाभावः ।

न चोत्पन्ने ज्ञाने संवेदनाभावस्याविशेषात् सन्तानान्तरेऽप्यर्थप्रकाशः ? नियतात्मसम्बन्धस्य नियामकत्वात् । तथाहि, यस्मिन्नात्मनि समवेतं तज्ज्ञानमुपजातं स एव द्रष्टा नान्यः, तत्र विवक्षितज्ञानसमवायात् । यस्य तु स्वसंवेद्यं ज्ञानं निराधारं तस्य सन्तानान्तरेऽर्थप्रकाश[स्त?:क]स्मान्न भवतीति चिन्त्यम् । कार्यकारणभावस्तु क्षणिकत्वे सति पूर्वं प्रतिषिद्ध एव ।

यच्चेदं स्वसंवेद्यं विज्ञानम् इत्यर्थान्तिरस्यासंवेदनमेव, तदसत्, विकल्पानुपपत्तेः । तथाहि, यदि स्वसंवेद्यमात्मान्तःकरणसंयोगादुपलभ्यं तदिष्टमेव । अथ तदेव ज्ञानं प्रमाणं प्रमेयं फलञ्चेति, तन्न, अन्यत्र त्रितयस्याभेदादर्शनात् । भेदेत्वनेकं दण्डाद्युदाहरणम् । अतो न ज्ञाने करणकर्मणोरभेदः स्वसंवेद्यत्वम्, नापि क्रियाकर्मणोरिति । तस्मात् ज्ञानान्तरसंवेद्यं संवेदनं वेद्यत्वात् घटादिवत् ।

यच्चेदं प्रकाशस्वरूपत्वाद् आत्मनैव प्रकाशते प्रदीपवत् इत्युक्तम्, तत्र यदि प्रकाशकत्वं बोधरूपत्वं विवक्षितं तदा साधनविकलमुदाहरणम्, प्रदीपे बोधरूपत्वस्यासम्भवात् । अथ प्रकाशकत्वं भास्वररूपसम्बन्धित्वं तद् विज्ञाने नास्ति, अतो ज्ञानान्तरस्य तद्विषयस्योत्पाद एव ज्ञानस्य परिच्छेद इति ।

यच्चेदं किं प्रकाशस्वरूपास्तद्विपरीता वा पदार्था ज्ञानेन प्रकाशन्त इत्युक्तम्, तत्र यदि प्रकाशस्वरूपत्वं बोधरूपत्वं तन्नास्ति, अर्थानामबोधरूपत्वात् । तेषां कथं प्रकाशः ? तद्विषयज्ञानोत्पादात् । यद्विषयं ज्ञानमुत्पन्नम्

असावर्थः परिच्छिन्न इति व्यवहारः । तस्मान्निराकारत्वे विज्ञानस्य विषयविषयिभावो नियामक इति,

धियो नीलादिरूपत्वे बाह्योऽर्थः किंनिबन्धनः । (प्र. वा. २।४३३)

इत्यपास्तमेव ।

यच्चेदं ग्राह्यग्राहकयोरेककालानुभवाभावेन दूषणम्, तदप्यपास्तम्, क्षणिकत्वानभ्युपगमात् । यो हि क्षणिकत्वं मन्यते तस्यायं दोषो ज्ञानकालेऽर्थस्यासद्भावोऽर्थकाले ज्ञानस्येति तयोर्ग्राह्यग्राहकभावानुपपत्तिरिति । तथा अवयविनः पूर्वमेव व्यवस्थापनात्, न रूपादिसमुदायस्यापरमार्थत्वेन विज्ञानविषयत्वमिति । परमाणूनां सद्भावसिद्धेर्विज्ञानमात्रमेवेति अदूषणमनभ्युपगमात् । अतो यदाह विज्ञानवादी 'एवं ग्राह्यग्राहकप्रविभागः कल्पनावशादिति', तदप्यपास्तमेव, बोधरूपव्यतिरेकेण बाह्यार्थस्य चक्षुरादिना प्रतिभासनात्, प्रवृत्तिनिवृत्त्योश्च तद्विषयत्वादिति । तथाहि, अर्थाविरोधे सति अर्थक्रियार्थिनस्तदभिमुखाः प्रवर्तन्ते चेति दृष्टम् । न च भ्रान्त्यैव प्रवृत्तिः, अविसंवादोपलब्धेः ।

अथ प्रवृत्तिनिवृत्त्योरर्थक्रियायाश्च विज्ञानादव्यतिरेक एव, तन्न, वस्तुरूपतया प्रतिभासमानानां परस्परव्यावृत्तात्मनां ज्ञानाभेदे प्रमाणाभावात् । अर्थानभ्युपगमे च संवादानुत्पत्तिः । व्यापारव्याहाराभ्याञ्च सन्तानान्तरानुभवात् अर्थाकारे संवादः, तन्न, तस्यासत्त्वात् । न चोत्पादनाविशेषेण संवादः । रूपज्ञानान्तरं रसज्ञानोत्पत्तौ विसंवादप्रसङ्गात् ।

अथ स्वसन्ततौ व्यापारव्याहारयोः स्वचित्तेहापूर्वकत्वेनोपलम्भात् सन्तानान्तरेऽपि तत्पूर्वकत्वानुमानमिति सन्तानान्तरसिद्धिः, न, प्रतीयमानयोर्व्यापारव्याहारयोः स्वचित्तादभेदे परचित्तपूर्वकत्वाभावप्रसङ्गात्, भेदे च वहिर्मुखावभासित्वेन प्रतीयमानत्वे कथं न बाह्यार्थसद्भावः ?

न च स्वसंविद्वादिनोऽविनाभावग्रहणाभावेऽनुमानप्रवृत्तिर्युक्ता । तथा हि, व्यापारव्याहारः प्रतिभासिज्ञानात्मनश्चित्तान्तरपूर्वकतां गृह्णाति, आत्मन्येव पर्यवसानात् । एतत्कारणमपि चित्तं न तत्कारणतां गृह्णाति, नाप्युभाभ्यां

वासनाक्रमेण विकल्पज्ञानं कार्यकारणभावग्राहकमिति वाच्यम्, अनुभवानुरूपत्वाद् वासनायाः कथं कार्यकारणभावाग्रहे तदध्यवसायिविकल्प इति । न चातद्रूपसमारोपितो विकल्पः, तस्य पारम्पर्येणाप्यर्थाविषयत्वे कार्यकारणभावाग्रहेऽनुमानाप्रवृत्तिरेव । तस्मादुभयोर्लिङ्गलिङ्गिनोरिदमस्य व्याप्यमिदमस्य व्यापकमित्यविनाभावग्रहे सति अनुमानं प्रवर्तत इति बोधादन्योऽर्थोऽभ्युपगन्तव्यः ।

यच्चेदं नीलमहं वेद्मीति ज्ञानं तैमिरिकस्य द्विचन्द्रदर्शनवद् भ्रान्तमिति, असदेतत्, अबाध्यमानत्वात् । तथाहि, तैमिरिकस्य तिमिरविनाशादूर्ध्वमेकत्वज्ञाने सति द्विचन्द्रदर्शनं भ्रान्तमिति प्रतिभाति, अनुत्पन्नतिमिरस्यान्यस्य, नैवं नीलमित्यादि ज्ञाने विपरीतार्थग्राहकप्रमाणानुपपत्तेर्न मिथ्यात्वमिति ।

ननूक्तं, किं केन बाध्यते ? ज्ञानं ज्ञानेनेति । तथाहि, उदकज्ञानस्योदकं विषयः सर्वजनप्रतीतः, तत्परित्यागेन विषयान्तरे मरीच्यादावुत्पन्नं तद्ग्राहिणा ज्ञानेन बाध्यते मिथ्यात्वविशिष्टतया ज्ञाप्यते मिथ्येदं ममोदकज्ञानमुत्पन्नमिति, तज्जनितसंस्कारनिवृत्तिर्वा । तथाहि, मरीचिज्ञाने सति उदकज्ञानजनितसंस्कारनिवृत्तौ कालान्तरेऽपि उदकं मया दृष्टमिति स्मरणानुत्पत्तौ तद्देशाभिमुख्येन प्रवृत्त्यभाव इति । बाधकानभ्युपगमे च ज्ञानस्य सत्येतरविवेकानुपपत्तेर्वादिप्रतिवादिनोर्जयपराजयव्यवस्था न स्यादित्युक्तम् ।

यत्तु 'मन्त्राद्युपप्लुताक्षाणाम्' इत्यादि वाक्यम्, तन्न परिहारार्हम्, स्वत एव प्रतिभासस्यान्यथात्वाभ्युपगमात् । तथाहि, मृच्छकलादयोऽन्यथा प्रतिभासन्ते न स्वरूपेणोपप्लुतचक्षुषाम्, न सर्वेषामितीष्यत एवेदं मिथ्याज्ञानम्, बाधकोपपत्तेः । इष्टञ्च बाधकं 'तथैव दर्शनं तेषामनुपप्लुतचक्षुषाम्' इति । दूरे च मरुषु अल्पोऽपि महानुपलभ्यते सन्निकृष्टे चाल्प एवेति, अनेन तस्य बाधा । न च तेनैवास्य बाधा, प्रमातृमात्रस्य सर्वदेशेष्वतद्रूपतया प्रतिभासनात् । महत्त्वञ्च देशविशेष एव प्रतिभासते नान्यत्रेत्यसदेव । तदेव हि पदार्थानां स्वरूपं यदविसंवादि स्वस्थात्मनामर्थक्रियासम्पादकञ्चेति । अतो मृच्छकलादयो येन रूपेणाविप्लुतचक्षुषां प्रतिभासन्तेऽर्थक्रियाञ्च

सम्पादयन्ति तेनैव रूपेण सन्तो न रूपान्तरेणेति । कथम् ? अर्थानामव्यवस्थानात् । अथ स्वप्नावस्थायामर्थानामसत्त्वेऽपि प्रतिभासो विशिष्टार्थक्रिया च रेतसो विसर्गः सम्भवतीति । नन्वेवं तर्हि स्वप्नावस्थायामर्थानामसत्त्वं कथं ज्ञातमिति वाच्यम् । यदि जाग्रदवस्थायामनुपलम्भात् ? तर्हि येषामुपलम्भस्तेषां सत्त्वमायातम् । अन्यथा हि जाग्रदवस्थायामनुपलम्भेन स्वप्नावस्थायामसत्त्वं न स्यात् । अतः प्रतीयमानत्वात् स्वप्नावस्थायामिव जाग्रदवस्थायामप्यसत्त्वमिति न वाच्यम्, प्रतिभासमानत्वस्य साधनस्य सद्भावेऽपि असत्त्वस्य साध्यस्यानिश्चयात्, प्रतीयमानत्वञ्च बोधेऽस्ति न चासत्त्वमिति व्यभिचारः । तथा अर्थानामसत्त्वे प्रतीयमानत्वस्य साधनस्यापक्षधर्मत्वं स्यात् । उदाहरणे प्रतीयमानत्वेन नासत्त्वम्, अपि तु प्रमाणतोऽनुपलब्धेरित्यन्यथासिद्धञ्चेति । न च 'सर्वं विज्ञानम्' इति वादिनः स्वप्नावस्था जाग्रदवस्था चेति विशेषः सम्भवति, उभयत्रापि स्वसंवेद्यस्य ज्ञानस्यावस्थानाभ्युपगमात् । व्रतवश्च (?) पूर्वं निरस्ता एव । तस्मादक्षादिजनितज्ञानसमवायो जाग्रदवस्था, तद्विपरीता तु स्वप्नावस्थेति युक्तम् ।

यच्चेदं बुद्ध्या विवेचनाद् भावानामसत्त्वम् इत्युक्तम्, तदसत्, स्वबुद्धिप्रतिभासमानवपुषामसत्त्वे बोधस्याप्यसत्त्वप्रसङ्गात् । तथाहि, रूपादयः परस्परस्वरूपपरिहारेण व्यवस्थिताः स्वबुद्धिविषयाः, पटादयोऽप्येवम् । अतो यद्यपि पटस्तन्त्वादिबुद्धौ न प्रतिभासते तथापि स्वबुद्धिविषयत्वात् परमार्थसन्नेव । तदेवं पटादयः परस्परव्यावृत्तबुद्धिविषया विशिष्टार्थक्रियाकारिणश्चेति परमार्थसन्त एव ।

न च प्रमाणं विना प्रमेयसिद्धिरिति विज्ञानव्यतिरेकिणामसत्त्वे प्रमाणमभिधेयम् । प्रमाणं विना च पदार्थानामसत्त्वसिद्धौ सत्त्वमपि स्यात्, प्रमाणाभावस्योभयत्राविशेषात् । अथ अर्थानामसत्त्वसिद्धौ ग्राह्यलक्षणायोगः प्रमाणम् ? न, तस्यापि भावधर्मत्वे विरुद्धत्वम्, अभावधर्मत्वे चाश्रयासिद्धत्वम्, उभयधर्मत्वे तु व्यभिचारादसाधनत्वमिति, व्यधिकरणत्वाच्च । तथाहि, ग्राह्यलक्षणस्यायोगो न ग्राह्यधर्म इति, कथं तस्यासत्त्वं साधयेत् ? स्वरूपासिद्धश्च, ग्राह्यलक्षणस्य सद्भावात् । तथा च, महत्त्वादि ग्राह्यलक्षणं वक्ष्य-

मानमिति । साध्याविशिष्टञ्च, ग्राह्यलक्षणायोगस्यापि साध्यत्वात् । न च प्रमाणान्तरमस्तीति ।

एतेन शून्यवादोऽपि निरस्त एवेति न पृथगभिधीयते । तथाहि, सर्वार्थानामसत्त्वे विज्ञानस्यापि ग्राह्यग्राहकाकाररहितत्वाद् असत्वे च, सर्वं शून्यमिति स्यात्, तच्च निरस्तमेव, प्रमाणाभावेन प्रमेयस्यासिद्धेः, बोधस्यार्थानाञ्च प्रमाणतो व्यवस्थापनादिति । तदेवं बोधव्यतिरेकेणार्थसद्भावसिद्धेरर्थानन्त्यात् प्रत्यर्थनियतत्वाच्च बुद्धेरनेकत्वं युक्तमिति ।

अन्ये तु आत्मनः परिणामविशेषो बुद्धिस्तद्रूपतया चानित्या, आत्मरूपतया तु नित्येति मतम् । तस्य निरासार्थं सा चानेकप्रकारेति वाक्यं मन्यन्ते । तथाहि, बुद्धेरनेकत्वादात्मनोऽप्यनेकत्वम्, अभेदात्, आत्मैकत्वे वा बुद्धेरेकत्वम् । न च भेदाभेदपक्षः सम्भवति, अनेकान्तवादस्य पूर्वमेव प्रतिषेधात् । अतो बुद्धेर्गुणत्वादनेकत्वेऽप्यात्मनस्तथाभावो न भवतीति दिग्वाससां मतं निषिद्धम् ।

**तस्याः सत्यप्यनेकविधत्वे समासतो द्वे विधे । विद्या चाविद्या चेति । तत्राविद्या चतुर्विधा संशयविपर्ययानध्यवसायस्वप्नलक्षणा ।**

नन्वेवं तर्हि बुद्धेरानन्त्यात् कथं तत्त्वज्ञानविषयत्वमित्याह * तस्याः सत्यप्यनेकविधत्वे समासतः * संक्षेपतो द्विविधेति परिज्ञानं कार्यमिति । केन रूपेण द्वैविध्यमित्याह * विद्या चा विद्या चेति * ।

अन्ये तु वेदान्तमते विद्याविद्ययोः श्रवणात् बुद्धेरानन्त्यप्रतिपादनमागमविरुद्धं स्यादित्याशङ्कानिषेधार्थमाह 'तस्याः सत्यप्यनेकविधत्वे समासतः' संक्षेपतो द्वैविध्यमिष्यत एव 'विद्या चाविद्या चेति' ।

विद्या हि देशकालावस्थादिभेदेनाबाध्यमानोऽध्यवसायः । तद्विपरीतार्था चाविद्येति, न तु प्रमाणाप्रमाणत्वे विद्याविद्यत्वे, व्यभिचारात् । तथाहि, यदि प्रमीयतेऽनेनेति प्रमाणमिति विवक्षितम् संशयादेरप्यात्मान्तःकरणाधिगमे प्रमाणत्वमस्तीति व्यभिचारः । सर्वेषु च प्रत्यक्षादिज्ञानेषु कारणत्वानुपपत्तेरव्याप्तिश्च । फलविवक्षायान्तु न स्मृतेः प्रमाणफलत्वमिति विद्यात्वं न स्यात् ।

गुरवस्तु विशिष्टव्यवहारकारणं विज्ञानं विद्या, विपरीतञ्चाविद्येति ब्रुवते। तत्र यदि प्रवृत्तिनिवृत्तिलक्षणो विशिष्टव्यवहारो विवक्षितस्तदा संशयादिज्ञानेष्वपि भावादतिव्याप्तिः। न च पक्षे सर्वत्रास्तीति अव्याप्तिश्च। अथ देशादिभेदेनापि सम्यक्तया मयोपलब्धमिति ज्ञानं विशिष्टव्यवहारः? तज्जनकत्वमपि न सर्वेषु विद्याभेदेष्वस्तीत्यव्याप्तिः। तथा च सम्यङ् मयोपलब्धमिति व्यवहारो न सर्वेषु विद्याभेदेषु विद्यत इत्यव्यापकत्वमेव।

तत्राप्यविद्या चतुर्विधेति क्रमातिक्रमेणाविद्यायाः स्वरूपनिरूपणमर्थप्रकाशस्य विवक्षितत्वात् तदुच्छेद्यत्वज्ञापनार्थमिति चान्ये, अविद्या हि विद्यया समुच्छिद्यत इति।

अथ केन रूपेण चतुर्विधा? * संशयविपर्ययानध्यवसायस्वप्नलक्षणा * स्वरूपेति। ननूहज्ञानमप्यस्ति, तस्यान्तर्भावो न विद्यायां नाप्यविद्यायाम्, उभयत्रापि चातुर्विध्याभिधानात्। न युक्तमेतत, संशयनिश्चयव्यतिरेकेणोहज्ञानस्यासंवेदनात्। अथास्ति संशयादूर्ध्वं बाह्यालिप्रदेशे सम्बन्धोपलब्धेः स्थानुपक्षप्रतिषेधे सति पुरुषेणानेन भवितव्यमिति सम्भावनाप्रत्ययः? स तु तस्मिंस्तदिति रूपत्वान्निश्चय एव। तथा हि, किमयं स्थाणुः स्यात् पुरुषो वेत्युभयप्रसङ्गे सत्येकस्य प्रतिषेधात् तदन्यस्याप्रतिषिद्धस्यावस्थानं भवत्येव।

अथ व्यधिकरणविशेषोपलम्भान्न युक्तो निश्चयः, तदसत्, संयोगिविशेषस्याभ्युपगमात्। यथा हि, काकनिलयनादयो विशेषाः संयोगिनि स्थाणौ निश्चयमुत्पादयन्ति, एवं बाह्यालीप्रदेशे पुरुषेऽपीति। तत्सम्बन्धस्तु समवेत एव विशेष इति न व्यधिकरणत्वम्। अथ नायं स्थाणुः बाह्यालीप्रदेशसम्बन्धित्वात्, इति विषयात् साधनान्न निर्णयः, तन्न, व्यापारापेक्षया पुरुषविषयत्वस्यापि सम्भवात्। ज्ञानान्तरत्वे तु ऊहज्ञानस्याव्यभिचार्यर्थज्ञानत्वात् प्रमाणरूपतायां प्रमाणान्तरमभिधेयम्, प्रमाणं विना तत्फलस्यानुपपत्तेः, व्यभिचारि वा प्रमाणसामान्यलक्षणं स्यात्। अथ इन्द्रियार्थसन्निकर्षाद्येव प्रमाणमूहोत्पत्तौ? कथं तर्हि ज्ञानान्तरम्, प्रत्यक्षफलत्वादित्यलम्।

समयवशेनार्थप्रतिपादकत्वाद् उपपन्नम् अनुमानादर्थान्तरत्वे सति प्रामाण्यमिति ।

**प्रसिद्धाभिनयस्य चेष्टया प्रतिपत्तिदर्शनात् तदप्यनुमानमेव**

अथ चेष्टाप्रमाणान्तरमिति केचित्, तन्निषेधार्थमाह *प्रसिद्धाभिनयस्य चेष्टया प्रतिपत्तिदर्शनात् तदप्यनुमानमेव* प्रसिद्धोऽभिनयश्चेष्टा कायिको व्यापारोऽर्थविशेषाविनाभूतो यस्यासौ तथोक्तः, तस्य चेष्टया अर्थविशेषे प्रतिपत्तिः । यथा मुखाञ्जलिसंयोगाद् विशिष्टात् पिपासाप्रतिपत्तिः, तस्य तया पूर्वमविनाभावोपलब्धेः । तथा च, अयं पिपासान्वितः, विशिष्टमुखाञ्जलिसंयोगवत्त्वात्, तदन्यैवंविधदेवदत्तवत् । अतः पक्षधर्मत्वादिबलेन गमकत्वाद् एतदप्यनुमानमेवेति । एवमन्यापि चेष्टा नाट्यशास्त्रप्रसिद्धा अनुमानेऽन्तर्भावनीयेति ।

**आप्तेनाप्रसिद्धगवयस्य गवा गवयप्रतिपादनादुपमानमाप्तवचनमेव ।**

अथोपमानं प्रमाणान्तरमिति केचित्, तन्निषेधार्थमाह *आप्तेनाप्रसिद्धगवयस्य गवा गवयप्रतिपादनाद् उपमानमाप्तवचनमेव* इति । आप्तेन प्रसिद्धगोगवयसारूप्येण[अ]प्रसिद्धगवयस्य गवा गवयप्रतिपादनादिति । यथा गौरेवं गवय इत्युपमानमिष्टम् । तद् आप्तवचनमेव न प्रमाणान्तरमिति । न चास्य उपमारूपत्वात् प्रमाणान्तरत्वम्, विध्यर्थवादादिभेदेनापि प्रमाणानन्त्यप्रसङ्गात् । अथ सत्यप्यवान्तरभेदे नामीषाम् आप्तोपदेशाद् भेदः, तदुपमानेऽपि समानम् ।

अथ वाक्यादुपलब्धसादृश्यस्याटव्यामटतो गवयार्थिनो मदीया गौरनेन सदृशीति ज्ञानमुपमानम्, असदेतत्, फलाभावात् । अज्ञाननिवृत्तिः फलमित्युक्तम्, निवृत्तेः प्रध्वंसत्वात् । तथाहि, यदि ज्ञानानुत्पत्तिः, विपरीतं वा ज्ञानमज्ञानम् उभयथापि तन्निवृत्तिः प्रध्वंस एव । प्रमाजनकञ्च प्रमाणम् । न च हेयादिबुद्धयः फलम्, तदपाये सति कालान्तरेण सुखदुःखादिविनिश्चयानन्तरमुत्पत्तेः । न च सादृश्यस्य प्रमेयत्वम्, तज्ज्ञानस्याफलत्वात् । अभ्युपगमे वा अन्यत् प्रमाणं वाच्यमिति ।

अथ गवयज्ञानमुपमानं मदीया गौरनेन सदृशीति ज्ञानफलम्, सादृश्यावच्छिन्नः पिण्डः, तदवच्छिन्नं वा सादृश्यं प्रमेयमिति । न चेदं ज्ञानमिन्द्रियजम्, अटव्यां व्यवस्थितस्य गृहावस्थितपिण्डविषयत्वेनोत्पत्तेः । न चानुमानजम्, लिङ्गव्यापारानुपलब्धेः । गोसादृश्यन्तु गवये गृह्यमाणमप्यसिद्धम्, व्यधिकरणत्वात् । तथा च, मदीया गौरनेन सदृशी, अस्य तत्सदृशत्वाद् इति व्यधिकरणतैव । अनुपपद्यमानस्यार्थस्याभावाद् नार्थापत्तिजम् । शब्दं विनाप्युत्पत्तेर्न शाब्दम् । अभावस्य च नियतविषयत्वम् । न चेदं स्मरणम्, गवयसादृश्यस्य गोपिण्डे पूर्वमननुभूतत्वात् । अतः प्रमाणान्तरफलमेतदित्याशयः परस्य ।

यदि च गोसादृश्यावच्छिन्नं गवयपिण्डम् इन्द्रियार्थसन्निकर्षादेवोपलभ्यते, तदा प्रत्यक्षफलमेव, न प्रमाणान्तरफलम् । तत्र किं स्मरणापेक्षमिन्द्रियमेवं ज्ञानं जनयति, अनपेक्षं वा ? अनपेक्षस्य ज्ञानजनकत्वेऽप्रसिद्धगोपिण्डस्य स्मरणेऽप्येतत् स्यात् । अथ पिण्डमात्रस्मरणे, अश्वादिपिण्डस्मरणे[ऽपि] स्यात्, अथ गवयसादृश्यावच्छिन्नस्मरणापेक्षं जनकम्, तत्रापि यदि स्मरणमात्रमपेक्षेत, गजादिस्मरणेऽपि स्यात् । अथ गोपिण्डस्मरणापेक्षम्, तत्रापि किं गोपिण्डमात्रस्मरणमपेक्षते, गवयसादृश्यावच्छिन्नं गोपिण्डस्मरणं वा । गोपिण्डमात्रस्मरणेऽश्वादिपि[ण्डस्मरणेऽपि ? ण्डेऽपि] स्यात् । गवयसादृश्यावच्छिन्नगोपिण्डस्मरणापेक्षित्वे पूर्वमेवानुभवो वाच्यस्तदन्तरेण संस्कारानुत्पत्तेः स्मरणस्यैवाभावात् । अतः सविकल्पकज्ञानाभावेऽपि गवयसादृश्यावच्छिन्ने गोपिण्डे पूर्वमनुभवोऽभ्युपगन्तव्यः । येन हि संस्कारोत्पत्तौ स्मरणाद् मदीयया गवा सदृशोऽयं गवय इति ज्ञानं स्यात् । पूर्वञ्च गवयसादृश्यावच्छिन्नगोपिण्डेऽनुभवप्रसिद्धौ गवयोपलम्भाद् मदीया गौरनेन सदृशीति कथमेतत् स्मरणं न स्यात् ? तथा पृष्टो ब्रवीति एतत्सदृशी मयोपलब्धा, न तु प्रमाणान्तरं निर्दिशतीति मन्यमानः प्रशस्तो भगवान् अन्तर्भावमाहेति ।

अन्ये तु यथा गौर्गवयस्तथेति वनेचरवाक्यात् सादृश्योपलम्भे सति उपजातसंस्कारस्याटव्यां परिभ्रमतो गोशादृश्यावच्छिन्नगवयदर्शने सति अविनाभावसम्बन्धस्मरणानन्तरं तथा चायं गोसदृश इति ज्ञानमुपमानं

मन्यन्ते। तस्माच्चानन्तरं गवयना [मे ? मायमि]ति संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः। फलं संज्ञासंज्ञिरूपम्, संज्ञावच्छिन्नो वा पिण्डः प्रमेयमिति। न च वाक्यादेव सङ्केतप्रतिपत्तिर्गवयपिण्डस्य परोक्षत्वात्, 'प्रत्यक्षं संज्ञाकर्म' (वै० सू०) इति सूत्रव्याघाताच्च।

न युक्तमेतत्, वाक्यादेव सङ्केतस्य प्रतीतत्वात्। तथाहि, सादृश्यवाक्यस्यायमर्थो यो गोसदृशः, स गवय इत्येवं व्यवहर्तव्यः। स च वाक्यादुपलब्धसङ्केतः सादृश्यावच्छिन्नं पिण्डमुपलभमानः परं व्यवहरति 'अयं गवयः' इति, न तु सङ्केतं प्रतिपद्यते प्रतिपिण्डम्, अन्यत्रापि सङ्केतप्रसङ्गात्। तथाहि, यत्र यत्र गोत्वं पश्यसि, तत्र तत्र गोशब्दः प्रयोक्तव्यः, तस्माच्च असावर्थः प्रतिपत्तव्य इति सङ्केतग्रहे सति गोपिण्डोपलम्भादयं गौरिति प्रतिपद्यते, न तु गोना [मे ? मायमि] ति, व्यवहाराभावप्रसङ्गात्। न तु सूत्रव्याघातः, प्रत्यक्षशब्दस्य दृढप्रमाणोपलक्षणत्वात्। दृढप्रमाणपरिच्छिन्नेऽर्थे संज्ञा प्रवर्तते। यथा देशान्तरव्यवस्थितोऽपि पिता स्वपुत्रस्य नाम करोति 'यज्ञदत्त नामासौ' इति।

अथ जातिशब्दस्य प्रत्यक्ष एवार्थे सङ्केतः, न, अतीन्द्रियेषु असङ्केतप्रसङ्गात्। दृष्टञ्च मनः शब्दस्यातीन्द्रियेऽपि मनसि दृढप्रमाणपरिच्छिन्ने सङ्केतः। तथा अयं गवय इति कथं पुनर्भवान् जानातीति परेण पृष्टो वनेचरेण ममाख्यातमिति वचनमेव निर्दिशति, न तु सादृश्यात् प्रतिपन्नमिति। कारकेण च व्यपदेशः। यथा चक्षुषा प्रतिपन्नमनुमानाच्च प्रतिपन्नमिति, तथा निर्विषयवाच्यप्रमाणमुपमानम्। अथास्ति संज्ञासंज्ञिरूपं प्रमेयम्, न, सम्बन्धप्रतिपत्तेः फलत्वे सम्बन्धिनः प्रमेयत्वानुपपत्तेः। अथ सम्बन्ध इव सम्बन्धिनः प्रतिपत्तिरेव उभयनिष्ठतया उपचारेणाभिधीयते। तथापि न संज्ञासंज्ञिरूपं प्रमेयम्, संज्ञायास्तदभावात्। अथ स्वयमुच्चार्य शब्दं प्रतिपद्यते, न, विवक्षाक्रमेण शब्दोत्पत्तिकाले सादृश्यज्ञानस्य प्रमाणस्यासम्भवात्। अथ जगतो विस्तीर्णतया क्वचिदुत्पन्नो गवयशब्दः प्रमेयः, न, तस्याश्रूयमाणस्य प्रमेयत्वानुपपत्तेः। अथ अप्रतिबन्धन्यायेन दूरस्थस्यागमने ब्रह्मभाषितस्यागमनं स्यात्।

न च सन्निहितः क्वचित् तदैव शब्दमुच्चरति, असंवेदनात् । अथ स्मृतिसमारोपितस्य गवयशब्दस्य प्रमेयत्वम्, न, तत्कल्पनायां कारणाभावात् । सादृश्यज्ञानानन्तरं अयं गवयनामेति प्रतिपद्यते, न चान्तराले तत्स्मृतेरनुप्रवेशे प्रमाणमस्तीति । संज्ञावच्छिन्नस्य तु पिण्डस्य प्रमेयत्वेन सम्बन्धज्ञानं स्यात्, तस्योभयालम्बनत्वादिति । तथा परेणापि अनुमानादुपमानस्य भेदमुपदर्शयता 'यथा तथेत्युपसंहारादुपमानसिद्धेर्ना विशेषः' इति वाक्यरूपमुपमानमिष्टमेव । तस्य चागमेऽन्तर्भावो न दोषायेति ।

**दर्शनार्थादर्थापत्तिस्तदप्यनुमानमेव ।**

अथ अर्थापत्तेरनुमानेऽन्तर्भावार्थं * दर्शना[र्थाद]र्थापत्तिस्तदप्यनुमानमेव * इति वाक्यम् । दृश्यत इति दर्शनं तस्मादुपलभ्यमानादर्थादन्यथानुपपद्यमानाद् अर्थस्यापत्तिः प्राप्तिः प्रसङ्ग इति । तदुक्तम्,

प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवेत् ।
अदृष्टं कल्पयेदन्या सार्थापत्तिरुदाहृता ॥

(श्लो. वा. ४५० पृ०)

इति षड्भेदा अर्थापत्तिः । तत्र प्रत्यक्षपूर्विका तु यथा स्फोटादिलक्षणं कार्यमुपलभ्य तदन्यथानुपपत्त्या वह्नेर्दाहिका शक्तिः प्रतीयते । न चात्र प्रमाणान्तरेण अविनाभावग्रहणम्, शक्तेः प्रमाणान्तरागोचरत्वात् । अनुपलब्धाविनाभावञ्च लिङ्गं न भवत्येव । अतः प्रमाणान्तरमेतत् ।

अनुमानपूर्विका तु यथा धूमादग्निं प्रतिपद्य तदन्यथानुपपत्त्या तद्विशेषप्रतीतिरिति । उपमानपूर्विका च यथा अटव्यां गवयदर्शनान्तरं मदीया गौरनेन सदृशीति गां प्रतिपद्य तदन्यथानुपपत्त्या वाहदोहादिसामर्थ्यप्रतिपत्तिः । अर्थापत्तिपूर्विका तु रूपोपलम्भान्यथानुपपत्त्या अवगतस्य चक्षुषः परिच्छेदिका शक्तिः प्रतीयत इति । आगमपूर्विका तु जीवति देवदत्ते गृहे नास्तीति वाक्याद् गृहेऽसत्त्वं प्रतिपद्य तदन्यथानुपपत्त्या बहिर्भावाविनाभूतं किञ्चिल्लिङ्गमस्तीति प्रमाणान्तरफलमेतत् ।

अभावपूर्विका तु यथा सदुपलम्भकप्रमाणपञ्चकव्यावृत्त्या देवदत्तस्य गृहेऽसत्त्वं प्रतिपद्य तदन्यथानुपपत्त्या बहिर्देशसम्बन्धः प्रतीयते ।

अन्तर्भावमाह * तदप्यनुमानमेव * न प्रमाणान्तरम् । तथा च स्फोटादिकार्येण अग्नेरतीन्द्रिया शक्तिः प्रतीयते, इत्यसदेतत्, तस्याश्चरमसह-कारिव्यतिरेकेण पूर्वमेव प्रतिषेधात् । प्रतिबन्धकाभावविशिष्टोऽग्निसंयोग एव अग्नेः शक्तिः, तत्सद्भावे कार्यकरणात् । अग्नित्वन्तु निजा शक्तिः, सापि प्रत्यक्षैव । यच्चानुमानात् सामान्यावबोधे सत्यर्थापत्तितो विशेषावबोध इति, तदपास्तमेव, सामान्यविशेषस्य साध्यत्वादिति वदता । उपमानस्य तु स्मर-णादभेदेऽपि तत्पूर्विकार्थापत्तिरनुमानमेव, व्याप्तेः पूर्वमेव ग्रहणात् । तथा च सादृश्यावच्छिन्नो गोपिण्डो वाहादिसमर्थः, तत्पिण्डत्वात् पूर्वोपलब्धैवंविध-गोपिण्डवत् । अर्थापत्तिपूर्विकापि अर्थापत्तिरनुमितानुमानमेव । तथा च रूपो-पलब्धिः करणकार्या क्रियात्वात्, छिदिक्रियावदिति । चक्षुः प्रसिद्धम्, तच्चानुमितं शक्तिमत् करणत्वात् वास्यादिवदिति ।

या चेयं जीवति देवदत्ते गृहे नास्तीत्यन्यथानुपपत्त्या बहिर्भावप्रतिपत्तिः, साप्यनुमानमेव, व्याप्तेः पूर्वमेव ग्रहणात् । तथाहि देवदत्तो बहिर्देशसम्बन्धी जीवनसम्बन्धित्वे सति गृहेऽनुपलभ्यमानत्वाद् विष्णुमित्रवत् । जीवनसम्ब-न्धित्वञ्च देवदत्तस्य अर्थापत्तिवादिनापि आगमादेव प्रतिपत्तव्यम्, अन्यथा अर्थापत्तिर्न प्रवर्तत । समानञ्चैतदभावपूर्विकायामप्यर्थापत्ताविति ।

प्रमाणपञ्चकाभावेनापि जीवतो देवदत्तस्य गृहेऽसत्त्वप्रतिपत्तौ बहिर्देश-सम्बन्धोऽनुमीयते । एवमन्यदप्युदाहरणमर्थापत्तेरविनाभावोपदर्शनेन अनुमान एव अन्तर्भावनीयम्, तथोत्पत्तिं विना अन्यथानुपपत्तेरुपदर्शयितुमशक्यत्वा-दिति ।

अथ विरोधिनः सर्पादेर्विस्फूर्जनादिशब्दश्रवणाद् तदनुमितौ विरोधिन्येव नकुलादौ प्रतिपत्तिः प्रमाणान्तरमिष्टं कैश्चित् । तदनुमितानुमानमेव, व्याप्तेः पूर्वमेव ग्रहणात् । प्रयोगस्तु विस्फूर्जनशब्दो भुजङ्गकार्यो विस्फूर्जन-शब्दत्वात् पूर्वोपलब्धैवंविधविस्फूर्जनशब्दवत् । एवमनुमितः सर्पः सन्निहितेन विरोधिना तद्वान्, विस्फूर्जनशब्दकर्तृत्वात् पूर्वोपलब्धैवंविधाहिवदिति ।

**सम्भवोऽप्यविनाभावित्वादनुमानमेव ।**

सम्भवः प्रमाणान्तरमिष्टं परैः । तन्निषेधार्थं * सम्भवोऽप्यविनाभावित्वादनुमानमेव * इति वाक्यम् । यत्र हि सहस्रं तत्रावश्यं [शतं] सम्भवतीत्यविनाभावस्य ग्रहणात् । तथा च सहस्रं स्वसमुदायि शतवत् सहस्रत्वात् पूर्वोपलब्धसहस्रवत् ।

**अभावोऽप्यनुमानमेव । यथा उत्पन्नं कार्यं कारणसद्भावे लिङ्गम्, एवमनुत्पन्नं कार्यं कारणासद्भावे लिङ्गम् ।**

कार्यानुत्पादेन कारणाभावः प्रतीयत इत्यभावरूपतयैव प्रमाणान्तरमिति केचित् । तन्निषेधार्थं न परं सम्भवः * अभावोऽप्यनुमानमेव * इति । * यथा उत्पन्नं कार्यं कारणसद्भावे लिङ्गम् * अविनाभावस्य पूर्वमेव ग्रहणात्, तथा * अनुत्पन्नं कार्यं कारणासद्भावे * कार्यानुत्पादस्य कारणाभावेनाव्यभिचारात् । तथा च कार्यानुत्पत्तिः कारणाभाववती कार्यानुत्पत्तित्वाद् उभयाभिमतकार्यानुत्पत्तिवत् ।

अथ सदुपलम्भकप्रमाणपञ्चकव्यावृत्त्या वस्तुनोऽभावस्य ग्रहणमिति प्रमाणान्तरमभावः । यथा हि, भावांशपरिच्छेदे भावस्य व्यापारस्तथा तदभावपरिच्छेदे अभावस्याप्यभ्युपगन्तव्यः । तदुक्तम्,

प्रत्यक्षाद्यवतारस्तु भावांशो गृह्यते यदा ।
व्यापारस्तदभावस्याप्यभावांशे जिघृक्षते ।।

(श्लो० वा० पृ० ४७८)

तथा हि, न प्रत्यक्षेणाभावस्य ग्रहणम्, तेन सम्बन्धाभावात् ।

सम्बद्धं वर्तमानञ्च गृह्यते चक्षुरादिना ।

(श्लो० वा० पृ० १६०)

प्रत्यक्षाभावादनुमानस्याप्य[प्र]वृत्तिः, तस्य सम्बन्धिग्रहणापेक्षित्वात् । एवं शब्दस्यापि । उपमानार्थापत्त्योश्चाव्यापारात् प्रमाणपञ्चकाभावेनैव प्रमेयाभावस्य ग्रहणमिति । तदुक्तम्,

प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ।।

(श्लो० वा० पृ० ४७३)

नन्वेवं तर्हि व्यवहितेऽप्यर्थे प्रमाणपञ्चकव्यावृत्तेः सद्भावादभावग्रहणप्रसङ्गः ? न, वस्तुग्रहणप्रतियोगिस्मरणादेरपि व्यापारात् । तदुक्तम्,

गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् ।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया ।।

(श्लो० वा० पृ० ४८२)

वस्तुनो भूतलादेः सद्भावं गृहीत्वा प्रतियोगिनं घटञ्च स्मृत्वा इन्द्रियव्यापारं विनैव मनसा प्रतिपद्यते नेह भूतले घटोऽस्तीति । तथा देवकुलं दृष्ट्वा बहिर्निर्गतो[हस्तिना]देशान्तरव्यवधानाद् इन्द्रियसम्बन्धं विनापि परेण पृष्टस्तदैव[हस्तिनः]नास्तितां प्रतिपद्यते । तदुक्तम्,

वस्तुमात्रं गृहीत्वापि पश्चात् किञ्चित् स्मरन्नपि ।
तत्रान्येनास्तितां पृष्टस्तदैव प्रतिपद्यते ।।

(श्लो० वा० पृ० ४८३)

तथा,

प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते ।
सात्मनः परिणामो वा विज्ञानं वान्यवस्तुनी ।।

(श्लो० वा० पृ० ४७५)

सर्वमेतदसत्, प्रत्यक्षादिनैव अभावस्य प्रतीतेः । तथा च, अक्षव्यापाराद् इह भूतले घटो नास्तीति ज्ञानम् अपरोक्षमुत्पद्यमानं दृष्टम् । अथ इन्द्रियाणां भूतलग्रहणे व्यापारो नाभाव इति चेत्, न, भूतलग्रहणे प्रमाणाभावात् । विशेषणस्य हि पूर्वं ग्रहणं पश्चाद् विशेष्यस्य, भूतलञ्च विशेष्यमिति न तस्य पूर्वं ग्रहणे प्रमाणमस्ति । उपेत्यवादेन तूच्यते, यदि वस्तुमात्रग्रहणे सति प्रतियोगिस्मरणं घटावरुद्धभूतलोपलम्भेऽपि तत्स्मरणे नास्तिताज्ञानप्रसङ्गः ।

अथ विशिष्टवस्तुग्रहणे सति प्रतियोगिस्मरणम्, तर्हि येन विशेषणेन विशिष्टं तद् वस्तु पूर्वं प्रतिपत्तव्यमिति किम् इन्द्रियादेव प्रतीयते, प्रामाणान्तराद् वेति। इन्द्रियादेव प्रतिपत्त्यभ्युपगमे कथं नाभावः प्रत्यक्षविषयो विशिष्टतायास्तद्रूपत्वात्। न चानुमानादेर्व्यापारे प्रमाणमस्ति।

यदि च अन्यया प्रमाणपञ्चकव्यावृत्त्यैव विशिष्टता प्रतीयते, तत्राप्यन्यवस्तुग्रहणाभ्युपगमे विशिष्टताग्रहणमेवाभ्युपेयमित्यनवस्था स्यात्। तस्मादिन्द्रियेणैव इतरपदार्थविविक्तं भूतलमुपलभ्य प्रतियोगिनं स्मरतीत्यभ्युपगमे घटाभावस्य प्रतीतत्वाद् अलं प्रमाणपञ्चकव्यावृत्त्येति।

सदंशप्रकाशकस्यैव असदंशेऽप्यन्वयव्यतिरेकाभ्यां व्यापारोपलब्धेर्न प्रमाणपञ्चकापरिच्छेद्ये वस्तुनि अभावस्य प्रमाणतेति वाच्यम्। न चेन्द्रियेण सम्बन्धाभावादग्रहणम्, तस्य कार्येणैव सद्भावसिद्धेः। तथा च परेणापि अपरोक्षज्ञानसद्भावेन इन्द्रियार्थयोर्योग्यतालक्षणः सम्बन्धोऽभ्युपगतः, स च रूपादावि[वाभा]वेऽप्यभ्युपगन्तव्यः, कार्यस्योभयत्राविशेषात् तथा वैशेषिकैरपि अपरोक्षज्ञानसद्भावेन इन्द्रियार्थयोः षोढा सम्बन्धोऽभ्युपगत इत्यभावेन विशेषणविशेष्यभावोऽस्त्येव, तेन हि सता अपरोक्षज्ञानोत्पत्तेः।

सदुपलम्भकप्रमाणपञ्चकव्यावृत्त्या तु अभावग्रहणे कथं षडेव प्रमाणानीत्यवधारणम्, प्रमाणाग्रहे तस्यानुपपत्तेः। न हि सदुपलम्भकप्रमाणाभावस्य परिच्छेद्यत्वे अन्यत् तस्य परिच्छेदकं प्रमाणमस्ति। अथ प्रमाणपञ्चकाभावस्यानेकत्वात् कश्चित् कस्यचिद् ग्राहको भवति ? एवं तर्हि तस्याप्यन्येन ग्रहणं तस्याप्यनेनेत्यनवस्था स्यात्। न च प्रमाणव्यक्तेरनेकत्वात् तदग्रहणे तन्निष्ठस्य षडेवेत्यवधारणस्य सम्भवः स्यात्। वैशेषिकाणान्तु प्रमाणव्यक्तीनामानन्त्येऽपि एकं लक्षणमुपग्राहकमस्तीति युक्तं प्रमाणग्रहणे सत्यवधारणमिति।

यच्चेदं देवकुलमात्रं दृष्ट्वा निष्क्रान्तोऽन्येन पृष्टस्तदैव हस्त्यादेर्नास्तिता प्रतिपद्यत इत्युक्तम्, तन्न, अस्य स्मरणत्वात्। यद्यपि पूर्वं हस्त्यादि सविकल्पकं ज्ञानं नोत्पन्नम्; तथापि हस्त्याद्यभावविशिष्टे देवकुले निर्वि-

कल्पकं ज्ञानमुत्पन्नम् । अन्यथा हि यदाहं देवकुलमद्राक्षम्, न तदा तं समीप- वर्त्तिनं हस्तिनमिति प्रश्नानन्तरं स्मरणं न स्यात् । तत्तु दृष्टम् । यस्य वस्तुनः पूर्वं नाभावः परिच्छिन्नस्तत्र परप्रश्नानन्तरं संशेते, न निरीक्षितं मया किं तत्र देवदत्तोऽस्ति उत नास्तीति । न चेदानीमभावं निश्चिनोति आगमस्यापि प्रमाणान्तरेणार्थतथाभावप्रतिपत्तिः । नाप्तोपदेशेन कदाचित् सम्भवात् । अतः पूर्वमेव हस्त्याद्यभावस्य प्रतीतेर्युक्तमेतत् स्मरणं न मया तत्र हस्ती दृष्ट इत्यादि । अभावस्य च प्रमेयत्वं क्षणभङ्गावसरे व्यवस्थापितमेवेति ।

**तथैतिह्यमप्यवितथमाप्तोपदेश एवेति ।**

अथ अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यं यथा इह वटे यक्षः प्रतिवसतीति, अस्यापि यदि प्रमाणान्तरेण अर्थतथाभावप्रतिपत्तिर्न आप्तोपदेशावर्थान्तरत्व- मित्याह * तथैतिह्यमवितथमाप्तोपदेश एव *। तथा हि पूर्वंप्रमाणानि नार्थान्तरम्, तथा ऐतिह्यमपि अवितथं यथार्थमाप्तोपदेश एव, न प्रमाणान्तरम् । विपर्यये तु अप्रामाण्यमिति ।

**पञ्चावयवेन वाक्येन स्वनिश्चितार्थप्रतिपादनं परार्थानुमानम् । पञ्चावयवेनैव वाक्येन संशयितविपर्यस्ताव्युत्पन्नानां परेषां स्वनिश्चितार्थ- प्रतिपादनं परार्थानुमानं विज्ञेयम् ।**

अथ प्राक् सूचितस्य परार्थानुमानस्य व्याकरणार्थं * पञ्चावयवेन इत्यादि प्रकरणम् । परार्थानुमिति[रिति]लक्ष्यनिर्देशः । * पञ्चावयवेन वाक्येन स्वनिश्चितार्थप्रतिपादनम् * इति लक्षणम् । स्वनिश्चितार्थः साध्यः, प्रतिपा- द्यतेऽनेनेति स्वनिश्चितार्थप्रतिपादनं लिङ्गम्, तत् पञ्चावयवेन वाक्येन सहितं परार्थमनुमानम् । प्रतिपत्तिर्वा प्रतिपादनम्, स्वनिश्चितार्थविषयं ज्ञानं पञ्चावयवेन वाक्येन जनितम्, यतः कारकसमूहाद् भवति तत् परार्थानुमान- मिति साध्यार्थवाक्यार्थवादिनां व्याख्यानम् । लिङ्गवाक्यार्थपक्षे तु अर्थ्यतेऽनेने- त्यर्थो लिङ्गम्, प्रतिपाद्यत इति प्रतिपादनम्, पञ्चावयवेन वाक्येन प्रतिपा- द्यमानं लिङ्गं परार्थानुमानमिति । यद्वा स्वनिश्चितार्थप्रतिपत्तिः प्रतिपा- दनम्, तच्च पञ्चावयवेन वाक्येन जनितं परार्थानुमानमिति ।

नन्वेतस्मिन् पक्षे कथं स्वार्थाद् विशिष्यते परार्थानुमानम्, चक्षुरादिना शब्देन वा लिङ्गं प्रतिपद्य तस्मात् साध्यं प्रतिपद्यत इति कुतः स्वार्थपरार्थ इति भेदः ? न च परसम्पादिताच्छब्दाल्लिङ्गं प्रतिपद्यत इति विशेषः, चक्षुरादेरपि परसम्पादितत्वात् शब्दरूपतावैलक्षण्यन्तु वैधर्म्यमात्रमेव । अतः साध्यवाक्यार्थपक्षो दोषानुपपत्ते(र?)र्ग्राह्य इति । तथा च केवलं लिङ्गं चक्षुरादिना प्रतिपन्नं साध्यप्रतिपत्तौ स्वार्थानुमानमशब्दसहितम्, शब्दसहितन्तु परार्थानुमानमिति विशेषः । तस्मादित्यनेन समर्थलिङ्गपरामर्शानन्तरम् अनित्य एवायम् इति साध्यप्रतिपत्तेः संवेदनाच्च साध्यमेव वाक्यार्थः । तस्मादित्येवमन्तमेव वाक्यम् । शेषञ्च अभिप्रायनिवेदनमिति, न त्वार्थम्, साध्यवाक्यार्थपक्षे बाधकानुपपत्तेरित्यलमतिविस्तरेण ।

पूर्वस्य सङ्ग्रहवाक्यस्य विवरणम् 'पञ्चावयवेनैव वाक्येन, न द्व्यवयवेन दशावयवेन वेति । केषाम् ? *संशयितविप[रीता ? र्यस्ता]व्युत्पन्नानाम् *स्वनिश्चितार्थप्रतिपादनं परार्थानुमानं विज्ञेयम् ।

अथ निरवयवत्वाद् वाक्यस्यानुपपन्नमेतत् पञ्चावयवेनेति । तथा च वर्णानां न समुदितानामर्थप्रतिपादकत्वम्, क्रमभाविनामाशुविनाशित्वेन समुदायासम्भवात् । न व्यस्तानाम्, एकस्मादेवार्थप्रतीतावन्येषामुच्चारण-वैयर्थ्यात् । उपलभ्यते च शब्दाद् उच्चरितार्थप्रतिपत्तिः । अतस्तदन्यथानुप-पत्त्या वर्णकलापादतिरिच्यमानः स्फोटात्मा प्रतीयत इति । तथा गौरिति शब्दोच्चारणाद् अभिन्नाकारं विज्ञानं श्रोत्रव्यापारादुत्पद्यमानं दृष्टम् । न चेदं संशयविपर्ययव्यतिरेकादवयविज्ञानवद् अभिन्नमर्थं विना भवतीति । वर्णोच्चा-रणन्तु स्फोटस्वरूपाभिव्यक्तये क्रियत इति न व्यर्थम् ।

असदेतत्, पूर्ववर्णानुगृहीतस्यान्त्यवर्णस्य स्वानुभवसहकारिणोऽर्थप्रति-पादकत्वात् । यथा च, एकस्मिन् वर्णे ज्ञानम्, तेन क्रियते संस्कारः; पुनर्द्वि-तीयवर्णे ज्ञानम्, तेनापि पूर्ववर्णसंस्कारसहकारिणा संस्कार इति क्रमेण अन्त्यवर्णज्ञानम्, तस्मात् पूर्वसंस्काराभिव्यक्तावशेषवर्णानुस्मरणे सति अन्त्य-वर्णादर्थप्रतिपत्तिः । न चैवं घटाद्यनुभवजनितसंस्कारस्य अनुभवान्तरसहकारिणः संस्कारारम्भकत्वेनातिप्रसङ्गः, तत्र विशिष्टादृष्टाभावात् । तदभावस्तु कार्या-

भावेनैव ज्ञायत इति । अत्र च कार्यस्य सद्भावाद् विशिष्टोऽदृष्टः कारणत्वेन कल्प्यत इति ।

अन्ये तु शब्दार्थोपभोगप्रापकादृष्टनियमिताः पूर्ववर्णानुभवजनितसंस्काराः पूर्ववर्णेष्वेकं स्मरणमारभन्ते तत्सहकारी चान्त्यो वर्णः पदम् । यद्वा संस्कारमेकं विचित्रमारभन्ते, तस्माच्च पूर्ववर्णेष्वेकं स्मरणमिति ।

अन्ये तु पूर्ववर्णानां तज्ज्ञानानाञ्च अतीतानामपि अन्त्यवर्णसहकारित्वम्, अन्वयव्यतिरेकोपपत्तेः । यथा हि, वर्तमानस्य कारणत्वम् अन्वयव्यतिरेकाभ्यां विज्ञातम्, एवमतीतस्यापीति । यद् वा पूर्ववर्णविनाशास्तज्ज्ञानप्रध्वंसाश्च समीपवर्तिनोऽन्त्यवर्णसहकारिण इति क्षीणार्थापत्तिः । एवंविधकल्पनानभ्युपगमे च वर्णोच्चारणवैयर्थ्यमेव स्यात् । न च स्फोटाभिव्य[क्त ? ञ्जक]मुच्चारणम्, समस्तव्यस्तविकल्पानुपपत्तेः । न समस्तैरभिव्यज्यते, समुदायानभ्युपगमात्, न व्यस्तैः, एकेनैवाभिव्यक्तौ शेषोच्चारणवैयर्थ्यप्रसङ्गात् । अथ कल्पना आश्रीयते, सा अर्थप्रतिपत्तावपि समर्थेत्यलं स्फोटपरिकल्पनया । अभिन्नाकारञ्च ज्ञानमन्त्यवर्णविषयं वर्णत्वविषयं वा ।

यद् वा घनावस्थितिप्रत्यक्षेष्विव वर्णेषु भ्रान्तमभिन्नाकारं विज्ञानमिति न स्फोटसिद्धिः । शब्दाभिव्यक्ताविव स्फोटाभिव्यक्तावपि दोषा इति समानतया शब्दपरीक्षायामेवाभिधास्यन्त इत्यलम् ।

वाक्यकल्पना त्वेकस्मिन् पदे ज्ञानस्योत्पादः, संस्कारस्य सङ्केतस्मरणस्य च उत्पद्यमानता, ततः संस्कारस्य सङ्केतस्मरणस्य च उत्पादः, पदार्थप्रतिपत्तेरुत्पद्यमानता, पदज्ञानस्य विनश्यत्ता, ततः पदार्थप्रतिपत्तेरुत्पत्तिः, स्मरणस्य विनश्यत्ता, पदज्ञानस्य विनाशः, संस्कारस्य द्वितीयपदज्ञानस्य च उत्पद्यमानता, ततो द्वितीयपदज्ञानस्योत्पादः, पूर्वसंस्कारसचिवेन पदार्थज्ञानेन संस्कारस्योत्पादः, संस्कारान्तरस्योत्पद्यमानता सङ्केतस्मरणस्याप्युत्पद्यमानता, पदार्थप्रतिपत्तेर्विनश्यत्ता, पूर्वसङ्केतस्मरणस्य विनाशः, ततो द्वितीयपदज्ञानसंस्कारस्योत्पादः सङ्केतस्मरणस्याप्युत्पादः, पदज्ञानस्य विनश्यत्ता, पदार्थप्रतिपत्तेरुत्पद्यमानता, पूर्वपदार्थप्रतिपत्तेर्विनाश इत्ययं

न्यायस्तावद् यावदन्त्यपदे ज्ञानम् । तेन च कल्पनया तत्संस्काराभिव्यक्तेरशेषपदार्थविषयं स्मरणं जन्यते । तेन च स्वानुभवेन च विशिष्टमन्त्यपदमेव वाक्यम्, तस्माच्च वाक्यार्थप्रतिपत्तिरिति ।

ननु पदज्ञानोत्पत्तेः पूर्वम् अदृष्टवशात् पदपदार्थविषयस्मरणोत्पादाभ्युपगमे तस्य पदज्ञानात् सङ्केतस्मरणकाले नावस्थानमिति पदार्थप्रतिपत्तेरूर्ध्वं कथं वाक्यार्थप्रतिपत्तिः ? न च पदार्थप्रतिपत्तिं विनैव वाक्यार्थप्रतिपत्तिः, अदर्शनात् । अथ पदज्ञानादूर्ध्वं कल्पनया तत्संस्कारेण स्मरणं जन्यते ततः पदज्ञानस्य विनश्यत्तेति सङ्केतस्मरणकाले तस्यानवस्थानात् पदार्थप्रतिपत्त्यभावे न वाक्यार्थप्रतिपत्तिरिति दूषणं तदवस्थमेव ?

असदेतत्, वाक्ये सङ्केतानुपपत्तेः । अन्त्यपदं वाक्यमेव, तद् अन्त्यार्थस्तु वाक्यार्थ इति । यदा च पूर्ववर्णतज्ज्ञानादूर्ध्वं कल्पनया तत्संस्कारेण स्मरणं जन्यते, ततः पदज्ञानस्य विनश्यत्तेति सङ्केतस्मरणाभावविशिष्टोऽन्त्यो वर्णः पदम्, तदैषा काक्यकल्पना । अन्यथा पूर्ववर्णेषु ज्ञानद्वारेण संस्काराद् विचित्रस्मरणानुगृहीतोऽन्त्यो वर्णः पदमित्यभ्युपगमेन पदार्थज्ञानानन्तरं पदज्ञानं स्यात्, वर्णज्ञानव्यवधानात् ।

अन्ये तु पूर्वार्थस्य प्रतिसमाधानार्थमन्त्यपदज्ञानानन्तरं कल्पनया तत्संस्कारः सङ्केतानुभवजनितसंस्कारश्च एकं स्मरणमारभते, ततः पदार्थज्ञानस्योत्पादः, पदज्ञानस्य विनश्यत्ता, स्मरणानुभवयोश्चाविरोध इति । ततः स्मरणानुभवविशिष्टाद् अन्त्यपदाद् वाक्यार्थप्रतिपत्तिरिति ।

अन्ये तु यद्यप्यन्त्यपदज्ञानानन्तरं सङ्केतस्मरणात् पदार्थावबोधे सति पदज्ञानं विनष्टम्, तथापि पुनस्तस्मिन्नेव ज्ञानमुत्पद्यते, ततः कल्पनया तत्संस्कारात् स्मरणोत्पादे सति अन्त्यपदाद् वाक्यार्थप्रतिपत्तिरिति ।

असदेतत्, शब्दस्य विरम्य व्यापारप्रतिषेधात् । एकदा पदं स्वविषयज्ञानं कृत्वा पुनर्न करोतीति ।

अन्ये तु प्रतिज्ञादिपदस्य पदान्तरोच्चारणकालेऽपि आकाशे पदान्तरारम्भकत्वेनावस्थानं तावद् यावदन्त्यपदम्, ततः पञ्चभिः पदैः श्रोत्रदेशे

वाक्यम् अवयविभूतमारभ्यते, ततो वाक्यार्थप्रतिपत्तिरिति । निरस्तञ्चैतद् अनुभवेन । न हि पूर्वपूर्वपदस्योत्तरोत्तरपदकाले सर्वेषाञ्च वाक्यकालेऽनुभवोऽस्तीति ।

अन्ये तु एकस्मिन् पदे ज्ञानम्, तेन क्रियते संस्कारः, पुनर्द्वितीयपदज्ञानम्, तेन प्राक्तनेन संस्कारेणान्यः संस्कार इति तावद् यावदन्त्यपदे ज्ञानमिति; ततः प्राक्तनसंस्काराभिव्यक्तौ पदचतुष्टयविषयं स्मरणमुत्पद्यते, तद्विशिष्टञ्चान्त्यपदं वाक्यमिति । न चात्रानुभवेन विरोधः, करणांशस्यैव कीर्तनात् ।

अन्ये स्मरणेनानुभवस्याविरोधं मन्यमानाः कल्पनामाश्रयन्ते । पदज्ञानात् सङ्केतस्मरणस्योत्पादः, पदार्थप्रतिपत्तेरुत्पद्यमानता, ततः पदार्थज्ञानस्योत्पादः पूर्वपदज्ञानस्य विनश्यत्ता, द्वितीयपदज्ञानस्योत्पद्यमानता, ततो द्वितीयपदज्ञानस्योत्पादः, पदार्थज्ञानस्य विनश्यत्ता, पदज्ञानस्य विनाशः, सङ्केतस्मरणस्योत्पद्यमानतेत्यनेन क्रमेण अन्त्यपदज्ञाने सति वाक्यार्थप्रतिपत्तिः । न चात्र पूर्वपदपदार्थानुस्मरणेन प्रयोजनमस्ति, तत्कार्यस्य विनश्यदवस्थपदज्ञानेनैव कृतत्वात् । पूर्वपदानुरक्ते हि द्वितीयपदे ज्ञानमुत्पन्नम्, तदनुरक्तं तृतीयपदमिति अशेषपदानुरक्तम् अन्त्यपदं वाक्यमिति ।

एतच्चासत्, पूर्वपदानुरागस्यान्त्यपदेऽप्रतिभासनात् । यथा हि, दण्डीति ज्ञानं दण्डानुरक्तमेव, नैवं द्वितीयादिपदज्ञानं पूर्वपदानुरक्तमिति । न चायं नियमः सम्भवति पूर्वपदानन्तरमेव द्वितीयादिपदोच्चारणम्, कतिपयकालव्यवधानेऽपि उच्चारणेऽर्थप्रतिपत्तिदर्शनादिति पूर्वैव कल्पना न्याय्या ।

अथास्त्वेवं वाक्यपरिकल्पना वाचकत्वन्तु निषिध्यते, अन्वयव्यतिरेकाभावात् । पदार्थेभ्यस्तु वाक्यार्थप्रतिपत्तिः । यत्र हि प्रमाणान्तरेणापि पदार्थप्रसिद्धिस्तत्रान्तरेणापि वाक्यं वाक्यार्थप्रत्तिपतिर्दृष्टा । यथा,

पश्यतश्चक्षुषा रूपं हेषाशब्दञ्च शृण्वतः ।
खुरनिक्षेपशब्दञ्च श्वेतोऽश्वो धावतीति धीः ॥

(श्लो० वा० पृ० ९४)

तथा च दूराच्चक्षुषा श्वेतं रूपमुपलभ्य हेषाशब्देन वा अश्वत्वजातिमनुमिनोति, खुरनिक्षेपशब्देन च धावनक्रियामवगत्य वाक्यं विनापि वाक्यार्थं प्रतिपद्यते। सत्यपि च वाक्ये पदार्थानामप्रतिपत्तेर्न वाक्यार्थप्रतिपत्तिः, यथा प्रसिद्धपदार्थैः कविभिर्विरचिते वाक्य इति। तस्मादभिहितपदार्थानाम् आकाङ्क्षायोग्यतासन्निधिद्वारेण वाक्यार्थगमकत्वमिति।

न युक्तमेतत्, शब्दस्याप्रामाण्यप्रसङ्गात्। तथा च पदरूपस्य तावद् अप्रामाण्यम्, अनुवादकत्वात्। तदुक्तम्,

पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते।
यच्चाधिक्यं भवेदेतत् स पदस्य न गोचरः॥

(श्लो० वा० पृ० ४१२)

वाक्यन्तु पारम्पर्येणाप्यवाचकमिति कथं शब्दः प्रमाणं स्यात्? अथ पदैरभिहितानाञ्च पदार्थानां गमकत्वादिति पारम्पर्येण शब्दः प्रमाणम्? तर्हि श्रोत्रपरिच्छिन्नस्य शब्दस्यार्थपरिच्छेदे व्यापारादिति पारम्पर्येण प्रत्यक्षस्यापि चोदनाविषये सन्निधिप्रामाण्योपपत्तेः कथं चोदनैव धर्मे प्रमाणम्। प्रमाणमेव चोदनेति नास्यावधारणस्य व्याघातः। वाक्यस्यार्थपरिच्छेदकत्वानभ्युपगमे च प्रमाणान्तरासम्भवात् पदार्थानां प्रत्यक्षादिष्वन्तर्भावश्चिन्तनीयः।

तत्रेन्द्रियार्थसन्निकर्षेण सह व्यापारानुपलब्धेर्न प्रत्यक्षेऽन्तर्भावः। अविनाभावस्यानुपपत्तेर्नानुमाने। अनुपपद्यमानार्थासम्भवान्नार्थापत्तौ। उपमानाभावयोश्च नियतविषयत्वमेव। प्रमाणान्तरस्य च अनभ्युपगमादयुक्तमेतत्।

न च पदानां स्वार्थप्रतिपत्तावेव चरितार्थत्वम्, उक्तन्यायेन वाक्यार्थप्रतिपत्तावपि व्यापारात्। विरम्य व्यापारस्तु एकमर्थं प्रतिपाद्य पुनस्तमेव प्रतिपादयन्तीति प्रतिषिद्धः।

यच्चेदं विनापि वाक्यं वाक्यार्थप्रतिपत्तिरित्युक्तम्, तदपरिज्ञानात्। वाक्येन हि जनिता वाक्यार्थप्रतिपत्तिः, प्रत्यक्षानुमानसम्पादिताः श्वेतोऽश्वो धावतीति बुद्धयः। यदपीदं पदार्थाप्रतिपत्तौ सत्यपि वाक्येन वाक्यार्थप्रतिपत्तिरिति, तदसत्, पूर्वपदार्थस्मरणानुगृहीतस्य अन्त्यपदस्य वाक्यत्वाच्च अवश्यमर्थप्रतिपादकत्वमिति व्यभिचाराभावः।

अन्विताभिधानन्तु न सर्वपदानाम्, एकेनैव क्रियाकारकसंसर्गान्वितस्य पदार्थस्याभिधाने शेषपदोच्चारणवैयर्थ्यप्रसङ्गात् । अथ अन्त्यं पदमन्विताभिधायकम् ? तस्यापि पूर्वपदानपेक्षित्वे तदुच्चारणवैयर्थ्यम्, सापेक्षित्वे तु न अस्मत्सिद्धान्ताद् भेदः ।

**अवयवोद्देशः प्रतिज्ञावैधर्म्यञ्च ।**

**अवयवाः पुनः प्रतिज्ञापदेशनिदर्शनानुसन्धानप्रत्याम्नायाः । तत्रानुमेयोद्देशोऽविरोधी प्रतिज्ञा । प्रतिपिपादयिषितधर्मविशिष्टस्य धर्मिणोऽपदेशविषयमापादयितुम् उद्देशमात्रं प्रतिज्ञा । यथा द्रव्यं वायुरिति ।**

**अविरोधिग्रहणात् प्रत्यक्षानुमानाभ्युपगतस्वशास्त्रस्ववचनविरोधिनो अनुमेयोद्देशा निरस्ता भवन्ति । यथा अनुष्णोऽग्निरिति, प्रत्यक्षविरोधी, घनमम्बरम् इत्यनुमानविरोधो, ब्राह्मणेन सुरा पेया इत्यागमविरोधो, वैशेषिकस्य सत् कार्यम् इति ब्रुवतः स्वशास्त्रविरोधी, न शब्दोऽर्थप्रत्यायक इति स्ववचनविरोधी ।**

के पुनरवयवास्तदाह * प्रतिज्ञापदेशनिदर्शनानुसन्धानप्रत्याम्नायाः * वाक्यैकदेशत्वात् । न पुनः परोपगता जिज्ञासादयः, तेषामशब्दरूपत्वात् ।

तत उपदेशक्रमेणावसरप्राप्तायाः प्रतिज्ञायास्तावल्लक्षणमुच्यते * अनुमेयोद्देशोऽविरोधी प्रतिज्ञा * इति । अनुमेयः प्रतिपिपादयिषितधर्मविशिष्टो धर्मी । धर्मविशिष्टता हि अस्तित्वाद्यपेक्षया सर्वपदार्थेष्वस्तीति प्रतिपिपादयिषितपदम् । यो हि धर्मः प्रतिपादयितुमिष्टः, तद्विशिष्टो धर्मी पक्षः । तस्योद्देशमात्रं प्रत्यक्षाद्यविरुद्धं परेषाम् अनिश्चितार्थाभिधायकं वचनं प्रतिज्ञेति । अपदेशस्य हेतोर्विषयापादनम् अर्थः प्रयोजनमस्येति प्रयोजनोपन्यासः । प्रयोगस्तु, प्रतिज्ञा इतरस्माद् भिद्यते, प्रत्यक्षाद्यविरुद्धानुमेयोद्देशत्वात्, यस्तु न भिद्यते, न चासावेवं यथा उदाहरणादिरिति । अनुमेयोद्देशो वा प्रतिज्ञेति व्यवहर्तव्यः, यथोक्तानुमेयोद्देशत्वात्, यश्चैवं न व्यवह्रियते, न चासावेवम्, यथा अपदेश इति । उदाहरणन्तु * यथा द्रव्यं वायुरिति * ।

ननु च असाधनाङ्गं प्रतिज्ञावचनम्, तदन्तरेणापि सम्बन्धवचनमात्रा-

दर्थप्रतीतेः । तथाहि, यद् यत् कृतकम्, तत्तद् अनित्यं दृष्टम्, यथा घटः, तथा च कृतकः शब्द इत्यत्र सामर्थ्यादेव प्रतिज्ञार्थसिद्धेर्व्यर्थं तदभिधानम् । अत्र च प्रमेयस्य प्रमाणेनैव सिद्धेः सामर्थ्यं किंरूपमिति चिन्त्यम् । न प्रत्यक्षस्वरूपम्, इन्द्रियार्थसन्निकर्षेण विप्रतिपत्तिविषयस्यापरिच्छेदात् । एवमागमेनापीति । अथानुमानमेव सामर्थ्यं तदवश्यमर्थप्रतिपत्तौ पक्षधर्मत्वादिकमपेक्षत इति प्रतिज्ञावचनमन्तरेण सपक्षासपक्षाप्रविभागे सति तदर्थाप्रतीतेर्न गमकमिति । अथ अभिधीयमानानुमानव्यतिरेकेण अन्यदनुमानं प्रस्तुतानुमानसामर्थ्यम्, न, तस्यापि अविनाभावानपेक्षित्वे न गमकत्वम्, प्रतिज्ञावचनञ्च विना तदर्थाप्रतीतेरिति पूर्वदोषानुषङ्गात् । न चाभिप्रेतार्थप्रतिपादनाय अनुमानोपन्यासकाले तदर्थसिद्धयेऽनुमानान्तरं पश्यामः ।

न च कृतकत्वानित्यत्वयोः सामान्येन व्याप्त्यभिधाने समर्थसाधनस्य शब्द एवोपसंहाराद् विज्ञायते अत्रैवानित्यत्वम् अस्याभिप्रेतमिति, सम्बन्धाभिधानस्य विरुद्धाविरुद्धाभिप्रायेणापि समानतया विवेकप्रतिपत्तेरभावप्रसङ्गात् ।

अथ यद्यत् कृतकं तत्तन्नित्यं दृष्टमिति व्याप्तिवचने विरुद्धवादी, अनित्यत्वेन च कृतकत्वस्य व्याप्तिवचने तत्त्ववादीति विनिश्चयः, तन्न, कृतकत्वनित्यत्वयोर्व्याप्तेः प्रतिपादयितुमशक्यत्वात् । तथा च, न कृतकेषु घटादिषु नित्यत्वम्, नित्येषु चाकाशादिषु कृतकत्वमिति दृष्टान्तदोषेण गतार्थत्वात् कथं विरुद्धत्वम् ? यदा च नित्यः शब्द इति प्रतिज्ञाय कृतकत्वानित्यत्वयोर्व्याप्तिं ब्रूते, तदा अभिप्रेतार्थविपरीतेन व्याप्तिकथनाद् विरुद्धवाद्ययमिति विशेषाध्यवसायो भवत्येव ।

ननु नित्या नित्याभिप्रायेणैवापि नित्यः शब्द इति वचनसम्भवात् प्रतिज्ञावचने सत्यपि तत्त्वातत्त्ववादिनोरनिश्चय एव, न, वचनेनैवाभिप्रायविशेषप्रसिद्धेः । न हि वक्तॄणां वचनादृतेऽभिप्रायावबोधे प्रमाणान्तरमस्तीति नित्यवचनान्नित्याभिप्राय एव निश्चीयते, अभिप्रायान्तरकल्पनायां प्रमाणाभावात् । अत एव वादिप्रतिवादिनोर्जयपराजयव्यवस्था प्राश्निकैः क्रियते । यत्राप्यन्यथा प्रतिपद्यमाना विचित्राभिप्रायतया प्रकरणार्थमन्यथा ब्रुवते, तत्रापि वचनविशेषेणैव अभिप्रायविशेषोऽनुमेयः, विवक्षान्तराद् वचनान्तरानुत्पत्तेः ।

अभ्युपगमे वा सम्बन्धवचनादपि अनिश्चय एव स्यात् किं नित्य[त्व] विवक्षातः कृतकत्वानित्यत्वयोः सम्बन्धवचनम्, उत अनित्यत्वविवक्षात इति।

अथ हेतुतदभावव्यवस्थाया वास्तवसम्बन्धापेक्षित्वाद् विपरीतविवक्षयापि कृतकत्वानित्यत्वयोरस्त्येव सम्बन्ध इति गमकत्वम्? तर्हि नित्यत्वाभिप्रायेणापि एवंसम्बन्धमुपदर्शयतः तत्त्ववादित्वं स्यात्, प्रकारान्तरेण सम्बन्धोपदर्शनस्यैवाभावात्। तथा प्रतिज्ञावचनं विना सन्दिग्धविपर्यस्ताव्युत्पन्नपुरुषविशेषाणां प्रमेयविशेषेषु आकाङ्क्षाप्रतिपत्तौ वादिनो विशेषेण पुरुषमात्रस्य प्रमेयमात्रप्रतिपादनाय प्रवर्तमानस्य उन्मत्तवादित्वं स्यात्।

अथ विवादात् पुरुषविशेषस्य प्रमेयविशेषापेक्षित्वप्रतिपत्तिः? तर्हि प्रतिज्ञा अभ्युपगतैव, विवादस्य तद्रूपत्वात्। प्रतिज्ञा हि प्रतियोगिप्रतिज्ञान्तरमपेक्षमाणो विवादः, साधनसहिता तु प्रतिज्ञेति। न च शास्त्रादेव यथोक्तविशेषप्रतिपत्तिः, अनुमानोपन्यासकाले तस्याप्रमाणत्वात्, प्रामाण्ये वा किमनुमानेनेति? तस्मात् परार्थानुमानमिच्छता अवश्यं कार्यं प्रतिज्ञावचनमिति। यच्चेदम्

अर्थादर्थगतौ शक्तिः पक्षहेत्वभिधानयोः।
नार्थे तेन तयोर्नास्ति स्वतः साधनसंस्थितिः॥ (प्र. वा. ४।१५)

इत्युक्तम्। तत्र अर्थस्यार्थगतौ सामर्थ्यं न निषिध्यते, केवलयोश्च पक्षहेत्वभिधानयोर्नार्थपरिच्छेदे सामर्थ्यम्, अवयवान्तरसद्भावे च स्वार्थोपस्थापनद्वारेण सामर्थ्यमिष्यत एव। अन्यथा हेत्वभिधानस्यापि असामर्थ्ये परार्थानुमानस्याप्रवृत्तिरेव।

अथ हेतुवचनं स्वयमसमर्थमपि समर्थहेतुसंसूचकत्वात् परप्रतिपत्तावुप[हीयते?दीयते] न चैवं प्रतिज्ञेत्याह,

साध्याभिधानात् पक्षोक्तिः पारम्पर्येण नाप्यलम्।
शक्तस्य सूचकं हेतुवचोऽशक्तमपि स्वयम्॥ (प्र. वा. ४।१७)

तत्र पक्षोक्तिः प्रतिज्ञावचनं पारम्पर्येणाप्यलं समर्थं न भवतीति असाधनाङ्गमिति। साध्ये साध्याभिधानमसाधारणमेव, सपक्षासपक्षयोर-

प्रसिद्धेः । तथा साध्याभिधानस्य पक्षोक्तेः पर्यायत्वात् साध्याविशिष्टता चेति । अथ साध्यानुपयोगित्वात् साध्यानभिधानम्, तदप्यवयवान्तरसहितस्य साध्यप्रतिपादकत्वादसिद्धम्, विपर्यये तु अनैकान्तिकम्, केवलस्य हेतुवचनस्यापि असाधकत्वात् । तथा प्रतिज्ञावचनमपि असाधनाङ्गमिति वदता अभ्युपगतैव प्रतिज्ञेति व्याघातः ।

अथ स्वप्रतिपत्तौ प्रतिज्ञावचनस्यानुपलम्भात् परप्रतिपत्तावनुपादानम् ? एवं तर्हि हेतुवचनस्यापि अदर्शनादनुपादानं स्यात् । अथ हेत्वर्थस्योपलम्भाद् युक्तं हेतुवचनम् ? तर्हि प्रतिज्ञार्थस्योपलब्धेः कार्यं प्रतिज्ञावचनम् । यथा हेत्वर्थः कारणं साध्यप्रतिपत्तौ, एवं प्रतिज्ञार्थः कर्मेत्युभयोः कारणत्वाविशेषात् पक्षस्यावचने प्रमाणं नास्तीति । उपस्थापिते च कर्मणि करणानां प्रवृत्तेरुपलम्भात् तदुपस्थापनार्थमवश्यं कार्यं प्रतिज्ञावचनमित्यलं विस्तरेण ।

* अविरोधिग्रहणात् प्रत्यक्षानुमानाभ्युपगतस्वशास्त्रस्ववचनविरोधिनोऽनुमेयोद्देशा निरस्ता भवन्ति * इति व्यवच्छेद्यं दर्शयति । यो ह्यनुमेयोद्देशो न प्रत्यक्षादिना विरुध्यते, सा प्रतिज्ञेति ।

अन्ये तु प्रत्यक्षाद्यविरुद्धोऽनुमेयस्तस्योद्देशः प्रतिज्ञेति व्याख्यां कुर्वते । यद्यपि अनुमेयस्य साध्यस्य साधनार्हतया प्रत्यक्षादिविरोधाभावान्न व्यवच्छेद्य[त्व]मस्ति, तथापि किम्भूतं साध्यमित्यपेक्षायां स्वरूपोपवर्णनार्थं प्रत्यक्षाद्यविरुद्धपदम्, प्रत्यक्षशब्देनैव विशिष्टार्थप्रतीतौ इन्द्रियार्थसन्निकर्षादिपदवदिति । तच्चासत्, अविरोधिपदस्योद्देशपदेन सामानाधिकरण्यात्, कर्मणः करणेन विरोधाभावाच्चेति । यथाभूतमुपलभ्यमानं कर्म तथाभूतमनुपलभ्यमानमपि इति उद्द्योतकरपादैरुक्तम् । प्रतिज्ञा तु करणमिति युक्तस्तत्र विरोधः ।

तत्र प्रत्यक्षविरोधी * यथा अनुष्णोऽग्निः * इति । [अनु?उ]ष्णतायास्त्वगिन्द्रियेण प्रतिभासनात् । * घनमम्बरमित्यनुमानविरोधी * आकाशस्य अनुमानादेव अमूर्तत्वविभुत्वप्रसिद्धेः । घनं निविडावयवमित्युद्देशस्तेन विरुध्यत एव, घनत्वे सति अस्मदादीनामसञ्चारप्रसङ्गाच्चेति । अभ्युपगतशास्त्रविरोधी यथा * वैशेषिकस्य * सर्वकार्यमुत्पत्तेः पूर्वं स[दुत्पद्यत?त्]

इति ब्रुवतः। वैशेषिकशास्त्रे हि असदुत्पद्यत इति प्रसिद्धम्। *न शब्दोऽर्थ-
प्रत्यायक इति स्ववचनविरोधी*। यदि हि शब्दोऽर्थप्रत्यायको न भवति,
कथमस्यार्थस्य ज्ञापनार्थं शब्दोच्चारणं न विरुध्येत इति।

अथ प्रमाणत्रित्वे सति कथं विरोधबहुत्वम्? लोकप्रसिद्धचपेक्षया।
यद्यपि आगमविरुद्धस्य प्रत्यक्षविरुद्धस्य चामी भेदास्तथापि स्ववचनविरुद्धः
स्वशास्त्रविरुद्धश्चेत्यादिव्यपदेशो जनानाम् अतस्तथैवाभिधानम्। अनुमानस्य
तु अनुमानान्तरेण विरोधासम्भवेऽपि स्वकीयानुमानस्य बलवत्वादयं व्यपदेशोऽ-
नुमानेन प्रतिज्ञा बाध्यत इति।

**हेतुवैधर्म्यम्**

**लिङ्गवचनमपदेशः। यदनुमेयेन सहचरितं तत्समानजातीये च
सर्वत्र सामान्येन प्रसिद्धं, तद्विपरीते च सर्वस्मिन्नसदेव तल्लिङ्गमुक्तम्।
तस्य वचनमपदेशः। यथा क्रियावत्त्वाद् गुणवत्त्वाच्च, तथा च तदनु-
मेयेऽस्ति तत्समानजातीये च सर्वस्मिन् गुणवत्त्वम् असर्वस्मिन् क्रिया-
वत्त्वम्। उभयमप्येतद् अद्रव्ये नास्त्येव, तस्मात् तस्य वचनमपदेश
इति सिद्धम्।**

प्रतिज्ञानन्तरं हेतुलक्षणमाह *लिङ्गवचनमवदेशः* इति। अर्थ-
लक्षणत्वाद् वचसामिति लिङ्गलक्षणानुवादेन अपदेशस्य लक्षणाभिधानमिति।
*यदनुमेयेन सहचरितं तत्समानजातीये सर्वत्र च सामान्येन प्रसिद्धम्*
यथाभूतो धर्मः पक्षे तत्समानः सपक्षे प्रसिद्धो न पुनर्विशेषः, अन्यधर्माणा-
मन्यत्रावृत्तेः। सर्वत्र चेति व्यापकाव्यापकभेदं दर्शयति। *तद्विपरीते
च* विपक्षे सर्वत्र नास्त्येवेति विपक्षादत्यन्तव्यावृत्तिं दर्शयति। प्रकरण-
समकालात्ययापदिष्टयोश्च व्युदासः पूर्ववदित्येतत् *लिङ्गमुक्तम्* इति
लक्षणानुवादः। तस्य वाचकं वचनं तृतीयान्तं पञ्चम्यन्तं वा अपदेशः।
तथा च अयमितरस्मात् भिद्यते यथोक्तलिङ्गवचनत्वात्, यस्तु न भिद्यते
न चासावेवम्, यथा प्रतिज्ञादिरिति।

तस्य व्यापकाव्यापकस्वरूपोपदर्शनार्थम् उदाहरणद्वयम् *यथा क्रिया-

वत्त्वाद् गुणवत्त्वाच्च * इति। च शब्देन प्रकारान्तरं क्रियावत्त्वेन गुणवत्वेन चेति दर्शयति। अनयोर्लक्षणेनाभिसम्बन्धोपदर्शनार्थमनुवादः। तथा च तत् क्रियावत्त्वं गुणवत्त्वञ्चानुमेये पक्षेऽस्ति। तत्समानजातीये च सपक्षे सर्वस्मिन् गुणवत्त्वम् असर्वस्मिन् क्रियावत्त्वमस्तीति। * उभयमप्येतद् अद्रव्ये * सत्तादौ नास्त्येवेति तस्य गुणवत्त्वस्य क्रियावत्त्वस्य च यथोक्तम् * वचनमपदेश इति सिद्धम् *।

हेत्वाभासनिरूपणम्

**एतेनासिद्धविरुद्धसन्दिग्धानध्यवसितवचनानामनपदेशत्वमुक्तं भवति। तत्रासिद्धश्चतुर्विधः, उभयासिद्धोऽन्यतरासिद्धस्तद्भावासिद्धोऽनुमेयासिद्धश्चेति। तत्रोभयासिद्धः, उभयोर्वादिप्रतिवादिनोरसिद्धो यथा अनित्यः शब्दः सावयवत्वादिति। अन्यतरासिद्धो यथा अनित्यः शब्दः कार्यत्वादिति। तद्भावासिद्धो यथा धूमभावेनाग्न्यधिगतौ कर्तव्यायामुपन्यस्यमानो बाष्पो धूमभावेनासिद्ध इति। अनुमेयासिद्धो यथा पार्थिवं द्रव्यं तमः कृष्णरूपवत्त्वादिति।**

* एतेन * सामर्थ्याद् अपदेशाभासा निरस्ता भवन्तीति स्ववाक्ये परिवर्जनार्थं परवाक्ये चोद्भावनार्थं संलक्ष्यते। तत्रेदं सामान्यलक्षणम्, अपदेशवदाभासमानाः सम्यङ् मतौ अपदेशाभासाः। [अ]हेतु[रवि?रपि वि] पर्यस्तबुद्धेर्हेतुव[दा?द्] भासते इति सम्यङ्मताविति पदम्। एतस्मिंश्च पक्षेऽन्यतरासिद्धस्य सम्यङ्मतौ हेतुवदाभासमानत्वं चिन्त्यम्। तस्य हि पक्षधर्मत्वादिमत्वमित्यतो हेतुवदाभासमानत्वाद् हेत्वाभासा इति सिद्धं लक्षणम्। यस्य तु हेतुरपि तस्य पक्षधर्मत्वाद्युपदर्शनेन हेतुत्वप्रतिपत्तौ यत्नः कार्यस्तत्प्रतिपत्तेर्ह्यर्थप्रतिपत्तौ कारणत्वादिति। अत एव अन्यतरासिद्धो यद्यपि वस्तुवृत्त्या हेतुस्तथापि पक्षधर्मतया परेणाप्रतिपन्नत्वाद् असिद्धबुद्धिं जनयतीति। प्रतिपन्ने च प्रमाणतः पक्षधर्मत्वेन साध्यसिद्धेर्भावाद् हेतुरेवेति।

अन्ये तु अहेतवः पक्षधर्मत्वाद्यन्यतमरूपाननुविधानात् समानधर्माणो हेत्वाभासा इति।

अथ कियतां पुनरेवमनपदेशत्वमित्याह *असिद्धविरुद्धसन्दिग्धानध्यव- सितवचनानामनपदेशत्वमुक्तं भवति* इति । *तत्रासिद्धश्चतुर्विधः* इति विभागः । सामान्यलक्षणञ्च आशङ्क्यमानपक्षवृत्तित्वम् अर्थाल्लभ्यते । आशङ्क्यमाने हि पक्षे वृत्तिः सर्वस्य विशेषणासिद्धादिप्रपञ्चस्यास्तीति पक्ष- व्यापीदं सामान्यलक्षणम् । न चैवं पक्षावृत्तित्वं तस्य असमर्थविशेषणादि- भेदेषु असम्भवात् ।

केन रूपेण चतुर्विध इत्याह *उभयासिद्धोऽन्यतरासिद्धस्तद्भावासिद्धो- ऽनुमेयासिद्धश्चेति* । तत्र *उभयोर्वादिप्रतिवादिनोरसिद्धो यथा अनित्यः शब्दः सावयवत्वादिति* शब्दे हि सावयवत्वं नित्यानित्यवादिनोर्न प्रसिद्ध- मिति । *अन्यतरासिद्धो यथा अनित्यः शब्दः कार्यत्वादिति* मीमांसकस्य हि प्रत्यभिज्ञानादिकमुपलभमानस्य शब्दे कार्यत्वं तावदसिद्धं यावद् अन्यतर- पक्षव्युदासद्वारेण प्रमाणतो (न?) व्यवस्थाप्यत इति निश्चीयते । निश्चिते तु पक्षधर्मत्वे ततः साध्यं प्रतिपद्यत एव । *तद्भावासिद्धो यथा धूमभावे- नाग्न्यधिगतौ* इति । धूमत्वेनानिश्चितं वाष्पादिकमुपलभमानस्याग्न्यधि- गतौ कर्तव्यायां तद्भावासिद्धो धूमभावस्यानिश्चितत्वादिति ।* अनुमेया- सिद्धो यथा पार्थिवं[द्रव्यं] तमः कृष्णरूप[त्वा?वत्त्वा] दिति ।

सांख्याभ्युपगतस्य तमसोऽप्रसिद्धत्वाद् अयमाश्रयासिद्धो न तु अभाव- रूपतमोऽपेक्षया । तस्य तु प्रमाणेन प्रसिद्धेः पक्षीकरणे कृष्णरूप[त्वं?वत्त्वं] स्वरूपासिद्धं, नत्वाश्रयासिद्धमिति ।

नन्वेवं विशेषणासिद्धादिप्रपञ्चस्यासङ्ग्रहणादयुक्तोऽयं विभागः? न, उभयासिद्धेऽन्यतरासिद्धे वा अन्तर्भावात् । तथा च उभयोर्विशेषणासिद्धो [यथा] नित्यः शब्दःअनभिधेयत्वे सति बाह्येन्द्रियप्रत्यक्षत्वात् । बाह्येन्द्रियप्रत्यक्षत्वे च सति अनभिधेयत्वादिति उभयोर्विशेष्यासिद्धः । अन्यतरविशेषणासिद्धो [यथा] नित्यः शब्दः कृतकत्वे सति अमूर्तत्वात् । एवमन्येष्वपि पुरुषविशेषाभिप्रायेण असिद्धत्वाद्यूह्यमिति । असमर्थविशेषणासिद्धो [यथा] नित्यः शब्दः प्रमेयत्वे सति कृतकत्वात् । विपर्ययेण असमर्थविशेष्य[ासिद्ध] इति । व्यधिकरण- विशेषणासिद्धो [यथा] नित्यः शब्दः चाक्षुषत्वे सति कृतकत्वात् । विपर्ययेण

व्यधिकरणविशेष्यासिद्ध इति। विरुद्धविशेषणासिद्धो[यथा] [अ?] नित्यः शब्दः कार्यत्वे सति अमूर्तत्वादिति। अन्यथासिद्धविशेषणासिद्धो [यथा] नित्यः शब्दः अभ्यस्यमानत्वे सति अमूर्तत्वादिति।

नन्वेवमपि एषामुभयासिद्धेऽन्यतरासिद्धेऽन्तर्भाववत् तद्भावा[सिद्धा] नुमेयासिद्धयोरप्यन्तर्भावः स्यादिति कथं चातुर्विध्यम् ? तयोरवान्तरभेदापेक्षया तद्भावासिद्धः, परार्थानुमानस्य प्रस्तुतत्वाद् उभयासिद्धोऽन्यतरासिद्धश्चेति भिद्यते। एवम् अनुमेयासिद्धोऽपीति चातुर्विध्यम्।

अन्ये तूभयासिद्धं यत्र विशेषणं विशेष्यञ्च असिद्धमिति। अन्यतरासिद्धन्तु विशेषणासिद्धं विशेष्यासिद्धं वेति मन्यन्ते। न चैतद् भाष्यकर्तुरभिप्रेतम्, वाद्यभिप्रायेण उदाहरणोपन्यासात्।

अन्ये तु स्वार्थानुमानस्य तद्भावासिद्धोऽनुमेयासिद्धश्चेति भेदः सकलभेदसङ्ग्राहकः, परार्थानुमानस्य तूभयासिद्धोऽन्यतरासिद्धश्चेति। अत्र तु स्वार्थानुमानेन परार्थस्य भेदनिरूपणमिष्टमेव, स्वातन्त्र्यन्तु निषिध्यते।

**यो हि अनुमेयेऽविद्यमानोऽपि तत्समानजातीये सर्वस्मिन् नास्ति तद्विपरीते चास्ति स विपरीतसाधनाद् विरुद्धो यथा यस्माद् विषाणी तस्माद् अश्व इति।**

विरुद्धलक्षणमाह * यो ह्यनुमेये * पक्षे व्याप्त्या अविद्यमानोऽपि तत्समानजातीये च सपक्षे * सर्वस्मिन् नास्ति तद्विपरीते च * विपक्षेऽस्ति * स विपरीतसाधनाद् विरुद्धो यथा यस्माद् विषाणी तस्माद् अश्व इति *। विषाणिनां पिण्डं पक्षीकृत्य अश्वोऽयम् इति साधयतो विषाणित्वाद् इति हेतुर्विरुद्धः, अस्य हि अनश्वेनैव व्याप्तत्वात्। अयन्तु विपक्षैकदेशवृत्तिः। विद्यमानसपक्षस्तथा विपक्षव्यापकः नित्य शब्दः कार्यत्वाद् इति। अविद्यमानसपक्षो विपक्षव्यापकः सर्वं कार्यं सर्वज्ञकर्तृकं प्रमेयत्वादिति। विद्यमानसपक्षो विपक्षैकदेशवृत्तिः, जीवच्छरीरं सात्मकं कार्यत्वादिति। अतश्चतुर्विधः।

**यस्तु सन्ननुमेये तत्समानासमानजातीययोः साधारणः सन्नेव सन्देहजनकत्वात् सन्दिग्धो यथा यस्माद् विषाणी तस्माद् गौरिति।**

एकस्मिंश्च द्वयोर्हेत्वोर्यथोक्तलक्षणयोर्विरुद्धयोः सन्निपाते सति संशयदर्शनादयमन्यः सन्दिग्ध इति कश्चित्। यथा मूर्तत्वामूर्तत्वं प्रति मनसः क्रियावत्त्वास्पर्शवत्त्वयोरिति।

नन्वयमसाधारण एव अचाक्षुषत्वप्रत्यक्षत्ववत् संहतयोरन्यतरपक्षासम्भवात्, ततश्चानध्यवसित इति वक्ष्यामः।

ननु शास्त्रे तत्र तत्र उभयथा दर्शनं संशयकारणमपदिश्यत इति, न, संशयो विषयद्वैतदर्शनात्। संशयोत्पत्तौ विषयद्वैतदर्शनमेव कारणम्, तुल्यबलत्वे च तयोः परस्परविरोधात् निर्णयानुत्पादकत्वं स्यान्न तु संशयहेतुत्वम्। न च तयोस्तुल्यबलत्वमस्ति अन्यतरस्यानुमेयोद्देशस्यागमबाधितत्वाद् अयन्तु विरुद्धभेद एव।

*यस्तु सन्ननुमेये* व्याप्त्या *तत्समानासमानजातीययोः* सपक्ष-
विपक्षयोः सन्नेव, स सन्दिग्धोऽनैकान्तिकः। *सन्देहजनकत्वात्* इति
कार्योपन्यासो न तु लक्षणम्, इन्द्रियादिष्वपि सद्भावेनातिव्यापकत्वात्।
उदाहरणन्तु *यथा यस्माद् विषाणी तस्माद् गौरिति* विषाणिनं पिण्डं
पक्षीकृत्य गौरिति साधयतो विषाणित्वादिति हेतुरनैकान्तिकः, पक्षत्रयवृत्ति-
त्वात्। अयन्तु सपक्षव्यापकत्वे सति विपक्षैकदेशवृत्तिः। अगौरयं विषाणि-
त्वात् इति सपक्षैकदेशवृत्तित्वे सति विपक्षव्यापकः। सपक्षविपक्षैकदेश-
वृत्तिश्च नित्यः शब्दः अस्पर्शवत्त्वात् इति चतुर्विधोऽनैकान्तिकः।

अथ चातुर्विध्यमनुपपन्नम्, अनैकान्तिकस्य लक्षणञ्चाव्यापकम्, विरुद्धा-
व्याभिचार्यसाधारणयोरव्यापनाद् इत्याशङ्काप्रतिषेधार्थम् *एकस्मिंश्च
द्वयोः* इत्यादि प्रकरणम्। द्वयोर्हेत्वोर्विभिन्नधर्मिस्थयोः सन्निपाते संशया-
दर्शनात् यथा नित्यः शब्दः कार्यत्वात्, नित्यमाकाशम् अकार्यत्वाद् इति
एकस्मिन् धर्मिणीति पदम्। तथाप्येकस्मिन् धर्मिणि द्वयोः सन्निपातेऽपि
न संशयो यथा अनित्यः शब्दः कार्यत्वात्, नित्यस्त्वमूर्तकार्यत्वादिति तदर्थं
*यथोक्तलक्षणयोः*।
तथाप्यविरुद्धार्थसाधकयोरेवंविधयोरपि न संशयहेतुत्वं यथा नित्यः

शब्दः कार्यत्वात्, आश्रितो गुणत्वात् । अतो * विरुद्धयोः * विरुद्धार्थसाधकयोः सन्निपाते संशयस्य दर्शनात् * अयमन्यः सन्दिग्धः * अनैकान्तिक इति केचित् । उदाहरणन्तु * यथा मूर्तत्वामूर्तत्वं प्रति मनसः क्रियावत्त्वास्पर्शवत्त्वयोरिति * । मूर्तं मनः क्रियावत्त्वात् छत्रवत् इत्येकः, अमूर्तं मनः अस्पर्शवत्त्वात् आकाशवत् इत्यपरः । उभयोश्च पक्षधर्मान्वयव्यतिरेकवत्त्वोपलब्धेः किं मूर्तं मनः स्यादुत अमूर्तमिति संशयः ।

तदसत्, अभयोः प्रयोगासम्भवात् । तथाहि, एकस्मिन् साधने प्रयुक्ते तस्य निर्दुष्टतायां साध्यसिद्धेरन्यस्य उपन्यासानुपपत्तिः, दुष्टतायां वा सैव अस्य अभिधेयेति । न च परस्परविरुद्धार्थसाधकत्वमेव अनुमानयोर्दोषः, प्रमाणेन उभयोरेकत्र सद्भावसिद्धौ विरोधस्याभावप्रसङ्गात् । अव्यभिचार्यानुमानयोश्च अवश्यमर्थव्यवस्थापकत्वम्, अव्यभिचारस्य तल्लक्षणत्वात्, विपर्यये तु व्यभिचारित्वमेव । यथा मूर्तं मनोऽस्पर्शवत्त्वे सति क्रियावत्त्वात्, अमूर्तञ्च क्रियावत्त्वे सत्यस्पर्शवत्त्वात् इति समस्तयोः प्रयोगः ।

तत्रापि असाधारणमित्याह * नन्वयमसाधारण एव अचाक्षुषत्वप्रत्यक्षत्ववत्, संहतयोरन्यतरपक्षासम्भवात् * इति । यथा हि, रूपातीन्द्रियगुणव्यतिरेकेण अन्यगुणानां गुणव्यवहारे साध्यसामान्यवत्त्वाद् द्रव्यत्वे सति नियमेनाचाक्षुषत्वं हेतुर्न सपक्षे रूपादावस्ति, नापि विपक्षे घटादावित्यसाधारणः; तद्वत् सहचरयोः क्रियावत्त्वास्पर्शवत्त्वयोरन्यतरपक्षासम्भवादित्यन्यतरस्मिन् सपक्षे विपक्षे वा असम्भवाद् असाधारणत्वम् । न चास्यासङ्ग्रह इत्याह * ततश्चानध्यवसित इति वक्ष्यामः * ।

यद् वा चाक्षुषत्वप्रत्यक्षत्ववत् इति वैधर्म्योदाहरणम् । यथा हि गुणः शब्दः सामान्यवत्त्वाद् द्रव्यत्वे सति नियमेन अचाक्षुषप्रत्यक्षत्वात् अन्धादिवदिति । अस्य सपक्षैकदेशे वर्तमानस्य विपक्षादत्यन्तं व्यावृत्तिर्न चैवं क्रियावत्त्वास्पर्शवत्त्वयोरित्याह * संहतयोरन्यतरपक्षासम्भवात् * इति ।

एवं विरुद्धाव्यभिचारिणोऽसाधारणस्य च संशयहेतुत्वे निराकृते सूत्रविरोधमुद्भावयन्नाह * ननु(च?)शास्त्रेतत्र तत्रोभयथा दर्शनं संशयकारणमपदिश्यते *

इति। तत्र तत्र शास्त्रे तस्मिंस्तस्मिन् सूत्रे 'दृष्टञ्च दृष्टवत्' (वै० सू०) दृष्ट्वा संशयो भवति। दृष्टञ्च मनसि क्रियावत्त्वं पुनर्दृष्टेन तुल्यं वर्तत इति दृष्टवद् अस्पर्शवत्त्वम्। अतो विरुद्धसाधनाभिसम्बद्धं मनो दृष्ट्वा संशेते किं मूर्तम् उत अमूर्तं मन इति। 'यथा दृष्टम् अयथादृष्टञ्च' (वै० सू०) उभयथा दृष्टत्वात् संशय इत्यसाधारणस्य च संशयहेतुत्वमुक्तम्। यथा दृष्टं पक्षे, पुनरयथा दृष्टं सपक्षे, विपक्षे च न दृष्टम्, अत उभयथा दृष्टत्वात् संशयः।

यद् वा यथादृष्टं क्रियावत्त्वेन पुनरयथादृष्टम् अस्पर्शवत्त्वेन, अत उभयथा उभाभ्यां सह दृष्टत्वात् संशय इत्युक्ते परेणाह न युक्तमेतत्, संशयस्य विषयद्वैतदर्शनादुत्पत्तेः। अस्यैव विवरणम् * संशयोत्पत्तौ विषयद्वैतदर्शनमेव कारणम् * इति। विषयद्वैते दृश्यत इति विषयद्वैतदर्शनं सामान्यमेव। विषयस्य वा द्वैतं द्वैविध्यं यस्य, तत् तथोक्तं सामान्यं तद्दर्शनमेव, विरुद्धविशेषानुवृत्तिहेतुत्वात् संशयकारणं न विरुद्धहेतुसन्निपातः, असाधारणधर्मो वा, विरुद्धविशेषैः सहानुपलम्भेन तस्य तत्स्मारकत्वानुपपत्तेः। विरुद्धविशेषानुस्मृतिहेतुश्च धर्मः संशयकारणं न परस्परविरोधी समानबल इति। समानबलत्वे च * तयो[:परस्पर]विरोधात् * इतरस्येतरेण प्रतिबन्धात् * निर्णयानुत्पादकत्वं स्यान्न(तु?) संशयहेतुत्वम् * तैलादिनाभ्यक्तस्य शालिबीजस्य स्वाङ्कुरानुत्पादकत्ववदिति अभ्युपगम्यैतदुक्तम्। परमार्थतो * न च तयोस्तुल्यबलत्वमस्ति * अन्यतरस्य अमूर्तं मन इति * अनुमेयोद्देशस्यागमविरोधित्वात् * इति। तथा चागमः 'तदभावादणु मनः' (वै. सू.) इति। मूर्तत्वञ्च अव्यापिपरिमाणसम्बन्धित्वमेव।

अथेदं वचनमप्रमाणम्? तर्हि मनः सद्भावासिद्धेराश्रयासिद्धमनुमानमिति यथोक्तलक्षणानुपपत्तिः। न च मूर्तत्वानभ्युपगमे युगपज्ज्ञानानुत्पत्त्यापि मनःसद्भावसिद्धिः, अमूर्तस्य सकलेन्द्रियाधिष्ठायकत्वेन युगपज्ज्ञानोत्पत्तिप्रसङ्गात्। अतः प्रतिज्ञावचनस्यागमेन विरोधाद् अमूर्तानुमानं न यथोक्तलक्षणमिति। अयन्तु विरुद्धभेदः प्रतिज्ञावसरेऽभिहित एव। विरुद्धाद् भिद्यते इति विरुद्धभेदः कालात्ययापदिष्टः, दुष्टपक्षोपन्यासानन्तरमुपन्यासात्।

सूत्रद्वितयञ्च एकधर्मिविषयत्वेन संशयप्रतिपादनार्थमिति व्याख्येयम्। तथा च, नियतसामान्यवस्तु प्रतिनियतविशेषैः सहचरितमेकदा दृष्टं पुनस्तत्तुल्यम् अन्यविशेषाविनाभूतम्, अतः कालान्तरे देशव्यवधानवशात् तद्दृष्ट्वा संशेते किमिदमेवम् आहोस्विदेवं न भवतीति। तथा एकधर्मिविषयत्वेऽपि। 'यथादृष्टम्' इति किञ्चित् सामान्यवद्वस्तु केनचिद् विशेषेण सह दृष्टम्, 'अयथादृष्टम्' तदेवोपलब्धिविशेषशून्यं विशेषान्तरसहितं दृष्टम्, अत उभयथा दृष्टत्वादुभाभ्यां सह दृष्टत्वाद् उभयशून्यस्योपलब्धौ तत्स्मरणे तु असति, संशयो भवतीति। यथा देवदत्तं सकेशमुपलभ्य पुनर्निष्केशम्, अतः कालान्तरे तमेव वेष्टितशिरसमुपलभमानस्य किमयं सकेशो निष्केशो वेति संशयो भवतीति।

**यश्च सन्ननुमेये तत्समानासमानजातीययोरसन्नेव सोऽन्यतरासिद्धोऽनध्यवसायहेतुत्वाद् अनध्यवसितः। यथा, सत् कार्यम् उत्पत्तेः इति। अयम् अप्रसिद्धोऽनपदेश इति वचनादवरुद्धः।**

**ननु चायं विशेषः संशयहेतुरभिहितः शास्त्रे तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषस्योभयथा दृष्टत्वादिति ? न, अन्यार्थत्वात्। शब्दे विशेषदर्शनात् संशयानुत्पत्तिरित्युक्ते नायं द्रव्यादीनामन्यतमस्य विशेषः स्याच्छ्रावणत्वम्, किन्तु सामान्यमेव सम्पद्यते। कस्मात् ? तुल्यजातीयेष्वर्थान्तरभूतेषु द्रव्यादिभेदानाम् एकैकशो विशेषस्योभयथा दृष्टत्वादित्युक्तं न संशयकारणम्। अन्यथा षट्स्वपि पदार्थेषु संशयप्रसङ्गात्। तस्मात् सामान्यप्रत्ययादेव संशय इति।**

समस्तसपक्षे तु असाधारणस्यानध्यवसितत्वमाह *यश्च सन्ननुमेये तत्समानासमानजातीययोः* सपक्षविपक्षयोः। *असन्नेव(च?) सोऽन्यतरासिद्धोऽनध्यवसायहेतुत्वात्* निश्चयानुपादकत्वात्। अतस्तद्धेतुत्वाद् *अनध्यवसितः*। *यथा सत् कार्यम् उत्पत्तेः* इत्युदाहरणम्। सकलं कार्यमुत्पत्तेः प्राक् स[द्अनु?द्उ]त्पद्यमानत्वादिति हेतुर्न[प्रत्या?आ]काशादौ नापि खरविषाणादावित्यनध्यवसितः

न चास्य सूत्रेणासङ्ग्रह इत्याह *'अयमप्रसिद्धोऽनपदेशः' (वै. सू.) इति वचनादवरुद्धः* सपक्षविपक्षयोरप्रसिद्धत्वादिति। एवमसाधारणस्य संशयहेतुत्वे निरस्ते सूत्रविरोधमुद्भावयन्नाह *ननु चायं विशेषः संशय-हेतुरभिहितः शास्त्रे, तुल्यजातीयेषु* सपक्षेषु। *अर्थान्तरभूतेषु* [विशेषेषु?विपक्षेषु] च। *विशेषस्य* असाधारणधर्मस्य। *उभयथा दृष्टत्वात्* सपक्षे विपक्षे च दृष्टत्वात् इति। अनेनासाधारणस्य संशय-हेतुत्वमुक्तमित्याङ्क्याह *न*। सूत्रस्य *अन्यार्थत्वात्* सत्तासम्बन्धि-त्वात्, अर्थशब्दवाच्यत्वाच्च किं द्रव्यं गुणः कर्म वा शब्द इति संशयः। न परं सत्तासम्बन्धात्, श्रावणत्वाच्च *इत्युक्ते* सूत्रकारेण, परो ब्रूते श्रावणत्वविशेषस्योपलब्धेः कथं शब्दे संशय इत्याशङ्क्याह *नायं द्रव्यादी-नामन्यतमस्य* इति। न द्रव्यस्य गुणस्य कर्मणो वा विशेषः श्रावणत्वम्। *किन्तु सामान्यमेव सम्पद्यते। कस्मात् ?* यस्मात् गुणत्वे शब्दस्य साध्ये *तुल्यजातीयेषु* रूपादिषु शुक्लत्वादिविशेषो गुणत्वेन सहचरितो दृष्टः। *अर्थान्तरभूतेषु* (च?) उत्क्षेपणादिषु कर्मत्वेन सहचरित उत्क्षेपणत्वादि-विशेषो दृष्टस्तथा पृथिव्यादिषु पृथिवीत्वादिर्द्रव्यत्वेनेति। *द्रव्यादि-भेदानाम्* द्रव्यगुणकर्मणाम्। *एकैकशः* प्रत्येकम्। *विशेषस्योभयथा दृष्टत्वात्* द्रव्यत्वगुणत्वादिसहचरितस्य दृष्टत्वात्। उपलभ्यते च शब्दे श्रावणत्वं विशेषस्तद् द्रव्यत्वादिविषयं स्मरणं भवत्येव। अतः किं द्रव्यस्य सतोऽयं विशेषः श्रावणत्वम्, गुणस्य कर्मणो वा, इत्युक्तेन न्यायेन संशय-कारणं श्रावणत्वम्, न तु असाधारणत्वेन। *षट्स्वपि पदार्थेषु* असा-धारणधर्मोपलब्धौ *संशयप्रसङ्गात्*। उत्क्षेपणत्वादिविशेषानुपलब्धेश्च संशयकारणत्वम् अन्वयव्यतिरेकाभ्यामुपलब्धम् न तदुपलब्धेः।

न च सर्वस्माद् व्यावृत्तं विशेषमुपलभमानस्य विरुद्धविशेषानुस्मृतेर-भावात् संशयो युक्तः, सद्भावेऽप्यनुच्छेदः स्यात्, निर्णयोत्पत्तिकारणा-भावात्। *तस्मात् सामान्यप्रत्यक्षादेव संशयः *न विशेषदर्शनादित्युपसंहारः।

यद् वा विशेषवत्त्वस्योभयथा सपक्षविपक्षाविशेषितस्योपलब्धेस्तदुपलम्भा-च्च शब्दे संशयः। न संशयकारणम् असाधारणो धर्मः, षट्स्वपि पदार्थेषु

संशयप्रसङ्गादिति । शेषं पूर्ववत् ।

**द्विविधं निदर्शनं साधर्म्येण वैधर्म्येण च । तत्र अनुमेयसामान्येन लिङ्गसामान्यस्यानुविधानदर्शनं साधर्म्यनिदर्शनम् । तद् यथा, यद् यत् क्रियावत् तत् तद् द्रव्यं दृष्टं यथा शर इति । अनुमेयविपर्यये च लिङ्गस्याभावदर्शनं वैधर्म्यनिदर्शनम् । तद् यथा, यद् यद् अद्रव्यं तत् तत् क्रियावन्न भवति यथा सत्तेति ।**

अथापदेशानन्तरं निदर्शनस्वरूपनिरूपणार्थम् * द्विविधं निदर्शनम् * इत्यादि प्रकरणम् । द्विविधमिति विभागो निदर्शनमिति निरुक्तिर्लक्षणम् । निदर्श्यते साध्यसाधनयोर्बहिर्व्याप्तिरस्मिन् इति निदर्शनं दृष्टान्तः । तथा निदर्श्यते साध्यसाधनयोर्व्याप्तिरनेनेति निदर्शनं व्याप्तिप्रतिपादकं दृष्टान्तवचनम् । तथाहि, निदर्शनम् इतरस्माद् भिद्यते यथोक्तदृष्टान्तवचनत्वात्, यस्तु न भिद्यते न चासावेवं यथा प्रतिज्ञादिरिति ।

तत् केन रूपेण द्विविधम् ? * साधर्म्येण वैधर्म्येण च * इति । * तत्रानुमेयसामान्येन * साध्यसामान्येन । * लिङ्गसामान्यस्य * साधनसामान्यस्य । * अनुविधानदर्शनं साधर्म्यनिदर्शनम् * । साधनसामान्यं व्याप्यम्, व्यापकञ्च साध्यसामान्यमिति । * यद् यत् क्रियावत् तत्तद् द्रव्यं दृष्टं यथा शरः * इत्युदाहरणम् । अत्र हि द्रव्यत्वव्याप्तौ क्रियावत्त्वं साधनमस्तीति । * अनुमेयविपर्यये * साध्यविपर्यये, * लिङ्गस्य * साधनस्य, * अभावदर्शनं वैधर्म्यनिदर्शनम् [तद्यथा] यद् यद् अद्रव्यं तत् तत् क्रियावन्न भवति । यथा सत्तेति * । सत्तायां हि द्रव्यत्वव्यावृत्या क्रियावत्त्वव्यावृत्तिरस्तीति वैधर्म्योदाहरणम् ।

**अनेन निदर्शनाभासा निरस्ता भवन्ति । तद् यथा नित्यः शब्दः अमूर्त्तत्वात् यद् अमूर्तं दृष्टं तन्नित्यम्, यथा परमाणुः, यथा कर्म, यथा स्थाली, यथा तमः अम्बरवदिति । यद् यद् द्रव्यं तत् तत् क्रियावद् दृष्टमिति च लिङ्गानुमेयोभयाश्रयासिद्धाननुगतविपरीतानुगताः साधर्म्यनिदर्शनाभासाः ।**

**यदनित्यं तन्मूर्तं दृष्टं यथा कर्म, यथा परमाणुः, यथाकाशं यथा**

**तमः घटवत्, यन्निष्क्रियं तद् अद्रव्यं दृष्टञ्चेति लिङ्गानुमेयोभयाव्या-वृत्ताश्रयासिद्धाव्यावृत्तविपरीतव्यावृत्ता वैधर्म्यनिदर्शनाभासा इति ।**

* अनेन [निदर्शनाभासाः] * निदर्शनवदाभासन्त इति निदर्शनाभा-सास्तत्समानधर्माणः । * निरस्ता भवन्ति * इति स्ववाक्ये परिवर्जनार्थं पर-वाक्ये चोद्भावनार्थं निरूप्यन्ते । * तद् यथा नित्यः शब्दः अमूर्तत्वात्, [यद्?] यद् अमूर्तं दृष्टं तन्नित्यं [दृष्टं?] यथा परमाणुः * इति । साधनस्या-मूर्तत्वस्य परमाणावभावात् साधनविकलमुदाहरणम् । अस्मिन्नेव साध्ये 'यथा कर्मेति' साध्यविकलम्, नित्यत्वस्य कर्मण्यभावात् । 'यथा स्थाली' इत्युभयविकलम्, नित्यत्वस्यामूर्तत्वस्य च स्थाल्यामभावात् । 'यथा तमः' इति धर्मासिद्धम्, सांख्याभ्युपगतस्य तमसोऽप्रसिद्धत्वात् । 'अम्बरवत्' इति साध्यसाधनाधिकरणत्वेऽपि अ[न]नुगतो वचनदोषः । यद् यद् अमूर्तं दृष्टं तत्तन्नित्य दृष्टं यथा अम्बरमिति वचनं विना अनुगतस्याप्रतीतेः ।

यद् वा सम्यग्दृष्टान्तोऽपि आकाशसत्त्ववादिनो न साध्यसिद्धिं करोति यावन्न प्रमाणतो व्यवस्थाप्यत इत्याभास उच्यते ।

अन्ये तु आभासावसरे सम्यग्दृष्टान्तोपदर्शनम् आभासानाम् आभास-ताज्ञापनार्थम् । इत्थम्भूतं हि निदर्शनम्, एतत्प्रतिरूपकाणि च तदाभासा इति ।

* यद् यद् द्रव्यं तत्तत् क्रियावद् दृष्टम् * इति च विपरीतानुगमः । तथा च एवं ब्रुवतो द्रव्यत्वं व्याप्यं क्रियावत्त्वञ्च व्यापकं स्यादिति विपरीता व्याप्यव्यापकभावप्रतिपत्तिः । न चैतदस्ति, आकाशादौ क्रियावत्त्वं विनापि द्रव्यत्वोपलब्धेः । समव्याप्तिकेऽपि साधनस्य व्यापकत्वाभिधाने साध्यस्य प्रति-पत्तिर्न स्यादिति दूषणम् । विषमव्याप्तिके विपरीतानुगमो दोषो न समव्याप्तिके इति चान्ये । अत्रोपसंहारवाक्यं लिङ्गञ्च, अनुमेयश्च, उभयञ्च, आश्रयश्चेति लिङ्गानुमेयोभयाश्रयाः, ते असिद्धा येषु आभासेषु ते तथोक्ताः, ते च अननु-गताश्च, विपरीतानुगताश्चेति * लिङ्गानुमेयोभयाश्रयासिद्धाननुगतविपरीतानु-गताः साधर्म्यनिदर्शनाभासाः * ।

वैधर्म्यनिदर्शनाभासान् दर्शयति * यदनित्यं तन्मूर्तं दृष्टं यथा कर्म * इति साधनाव्यावृत्तम्, तस्य हि अमूर्तत्वादिति। तस्मिन्नेव साध्ये 'यथा परमाणुः' इति साध्याव्यावृत्तं व्यतिरेकोदाहरणम्, परमाणोर्नित्यत्वादिति। 'यथा आकाशम्' इत्युभयाव्यावृत्तम्, अमूर्तत्वस्य नित्यत्वस्य च तत्राव्यावृत्तिरिति। 'यथा तमः' इति धर्मासिद्धम्, सांख्याभ्युपगतस्य तमसोऽप्रसिद्धत्वादिति। 'घटवत्' इत्युभयाव्यावृत्तावपि अव्यतिरेकः, यद् यन्नित्यं न भवति तत्तदमूर्तं न भवतीति वचनं विना व्यतिरेकस्याप्रतिपत्तेः। घटासत्त्ववादिनो वा प्रमाणेनाप्रतिपादितो न साध्यसिद्धिं करोतीति आभास उच्यते, * यन्निष्क्रियं तद् अद्रव्यं दृष्टम् * इति व्यतिरेकः। साध्यव्यावृत्त्या हि साधनव्यावृत्तिर्वाच्या, न तु साधनव्यावृत्त्या साध्यव्यावृत्तिः, क्रियावत्त्वाभावेऽपि आकाशादौ द्रव्यत्वस्य साध्यस्याव्यावृत्तेः, साधनाभावो हि व्यापकः साध्याभावो व्याप्य इति। एतेषामुपसंहारः, लिङ्गञ्च, अनुमेयश्च, उभयञ्चेति लिङ्गानुमेयोभयानि, तानि अव्यावृत्तानि येषु आभासेषु ते लिङ्गानुमेयोभयाव्यावृत्ताः, ते च आश्रयासिद्धश्च अव्यावृत्तश्च विपरीतव्यावृत्तञ्चेति * लिङ्गानुमेयोभयाव्यावृत्ताश्रयासिद्धाव्यावृत्तविपरीतव्यावृत्ता वैधर्म्यनिदर्शनाभासाः * इति।

**निदर्शनेऽनुमेयसामान्येन सह दृष्टस्य लिङ्गसामान्यस्य अनुमेयेऽन्वानयनमनुसन्धानम्। अनुमेयधर्ममात्रत्वेनाभिहितं लिङ्गसामान्यमनुपलब्धशक्तिकं निदर्शने अनुमेयधर्मसामान्येन सह दृष्टम् अनुमेये येन वचनेनानुसन्धीयते तदनुसन्धानम्। तथा च वायुः क्रियावानिति। अनुमेयाभावे च तस्यासत्त्वमुपलभ्य, न च तथा वायुर्निष्क्रिय इति।**

एवं सह आभासैर्निदर्शनमुपदर्श्य अनुसन्धाननिरूपणार्थमाह * निदर्शनेऽनुमेयसामान्येन सह * इत्यादि। * निदर्शने * दृष्टान्ते। * अनुमेयसामान्येन * साध्यसामान्येन। * सह दृष्टस्य लिङ्गसामान्यस्य अनुमेये * पक्षे। * अन्वानयनमनुसन्धानम् *। आनयनं प्रतिपादनमन्यस्यापि सम्भवतीति लिङ्गस्येति पदम्। तथापि लिङ्गस्य निदर्शने प्रतिपादनमस्तीति तद्व्युदासाय अनुमेयपदम्। अनुमेये च गृहीताविनाभावस्य लिङ्गस्य प्रतिपादकं हेतुवचनमपीति निदर्शने-

ऽनुमेयसामान्येन सह दृष्टस्य लिङ्गसामान्यस्येति पदम्। अतः अनुसन्धानमितरस्माद् भिद्यते निदर्शने गृहीतव्याप्तिकस्य लिङ्गस्यानुमेयेऽन्वानयनरूपत्वात्, यस्तु न भिद्यते न चासावेवं यथा प्रतिज्ञादिरिति।

सङ्ग्रहोक्तेर्विवरणमाह * अनुमेयधर्ममात्रत्वेनाभिहितं लिङ्गसामान्यम् * न तु समर्थमिति मात्राभिधानेन दर्शयति। * अनुपलब्धशक्तिकम् * इति। अनुपलब्धा शक्तिरविनाभावो यस्य तत् तथोक्तम्। पुनः * निदर्शनेऽनुमेयधर्मसामान्येन सह दृष्टम् *। [अनुमेये पक्षे] येन वचनेन 'अनु' पश्चात् सन्धीयते पक्षधर्मतया ख्याप्यते तद् अनुसन्धानम्।

तदपि द्विविधम्, साधर्म्येण वैधर्म्येण च। तत्र अनुमेयसामान्येन सह लिङ्गसामान्यस्य निदर्शने सत्त्वमुपलभ्याभिसन्धत्ते तथा चायं क्रियावान् वायुरिति। वैधर्म्यनिदर्शने तु अनुमेयस्य द्रव्यत्वस्याभावे च तस्य क्रियावत्त्वस्यासत्त्वमुपलभ्य न च तथा वायुर्निष्क्रिय इत्युपसंहारः। निष्क्रियत्वप्रतिषेधेन क्रियावत्त्वमुपसंहरतीति। पृथग्वचनन्तु प्रतिषेधाभिप्रायेणैव।

ननु व्यर्थमनुसन्धानवचनम्, तदन्तरेणापि हेतुवचनाद् गृहीतव्याप्तिकात् साध्यसिद्धेः? न, अनेन विना अबाधितविषयत्वस्याप्रतिपत्तेः। हेतुवचनन्तु कारणमात्रोपस्थापकम्, न तु गृहीतव्याप्तिकस्य अन्तर्व्याप्तिप्रतिपादकमिति। यथाभूतेन द्रव्यत्वाविनाभाविना प्रमाणान्तराविरुद्धेन क्रियावत्त्वेन क्रियावान् करः, तथा च वायुरित्यन्तर्व्याप्तिप्रतिपत्तिः। तदभावे तु बहिर्व्याप्तिसद्भावेऽपि न गमकत्वम्। यथा शब्दस्य अनित्यत्वे साध्ये सामान्यवत्त्वे सति चाक्षुषप्रत्यक्षः, तस्य कालात्ययापदिष्ट[स्य?त्वं]चेति। अत एवात्रोपनयवचनं न निर्विषयत्वादप्रमाणम्।

न चोपसंहार विना धर्मिविशेषेण सम्बन्धाप्रसिद्धौ तत्रैव साध्यविशेषप्रतिपत्तिः स्यात्। स्वार्थानुमानकाले च उपनयार्थस्योपलब्धेः कार्यं तद्वचनम्, स्वप्रतिपत्त्यनुसारेण परार्थानुमानप्रवृत्तेः। न च स्वप्रतिपत्तावेतस्यासत्वम्, अविनाभावसम्बन्धस्मरणानन्तरं परामर्शज्ञानस्यानुभवात्। अनभ्युपगमे च सम्बन्धस्मरणस्यानियतत्वात् नियतप्रदेशे प्रतिपत्तिर्न स्यादित्युक्तम्।

तस्माद् अयमित्यपरोक्षतानिर्देशस्याविनाभावसम्बन्धस्मरणानन्तरमुपलब्धेरस्ति परामर्शज्ञानम्, अतस्तदुपन्यासार्थं कार्यमनुसन्धानवचनमिति ।

**अनुमेयत्वेनोद्दिष्टे चानिश्चिते च परेषां निश्चयापादनार्थं प्रतिज्ञायाः पुनर्वचनं प्रत्याम्नायः । प्रतिपाद्यत्वेनोद्दिष्टे चानिश्चिते च परेषां हेत्वादिभिरवयवैराहितशक्तीनां परिसमाप्तेन वाक्येन निश्चयापादनार्थं प्रतिज्ञायाः पुनर्वचनं प्रत्याम्नायः, तस्माद् द्रव्यमेवेति ।**

अथ प्रत्याम्नायस्वरूपोपदर्शनार्थम् * अनुमेयत्वेनोद्दिष्टे * इत्यादि प्रकरणम् । * अनुमेयत्वेन * अनुमानयोग्यत्वेन । * उद्दिष्टे चानिश्चिते[च] परेषाम् * संशयितविपर्यस्ताव्युत्पन्नानाम् । पुनः * निश्चयापादनार्थं प्रतिज्ञायाः [पुनः]वचनं प्रत्याम्नायः * ।

सङ्ग्रहोक्तेर्विवरणमाह अनुमेये धर्ममात्रे * प्रतिपाद्यत्वेन * साध्यत्वेन, * उद्दिष्टे चानिश्चिते च परेषाम् * । किं विशिष्टानाम् ? * हेत्वादिभिर[ा?वयवैरा]हितशक्तीनाम् * इति । आहिता शक्तिरविनाभावो यस्य लिङ्गस्य यैस्तैस्तथोक्तैस्तेषाम् । एतस्मात् साधनाद् भविष्यति साध्यसिद्धिरित्येवं कृतास्थानामिति[भावः] । * निश्चयापादनार्थं प्रतिज्ञायाः पुनर्वचनं प्रत्याम्नायः * इति । पुनरुक्तमात्रव्यवच्छेदार्थं प्रतिज्ञायाः पुनर्वचनमिति पदम् । तथापि अनित्यः शब्दोऽनित्यः शब्द इति पुनरुक्तव्युदासार्थं निश्चयापादनार्थमिति पदम् । अविप्रतिपन्नस्य एतस्मादपि निश्चयो भवतीति तदर्थं परेषामिति । तथापि तेषां मध्ये कस्यचिद् एकावयवोपदर्शनेन अन्वयव्यतिरेकानुस्मरणद्वारेण अर्थप्रतिपत्तिर्भवतीति * परिसमाप्तेन वाक्येन * इति ग्रहणम् । यस्मिन्नवयवे सति वाक्यं परिसमाप्यत इति । तदेवं प्रत्याम्नायः इतरस्माद् भिद्यते यथोक्तलक्षणत्वादिति ।

ननु प्रतिज्ञावचनस्य तु विनाशित्वेन अवस्थानासम्भवात् कथं पुनर्वचनमिति ? तत्समानशब्दोच्चारणात् । यथा क्षणिकत्वेऽपि कर्मणः पूर्वं समानाभिनयकरणात् पुनर्नृत्यतीति व्यपदेशस्तद्वत् प्रतिज्ञासमान[शब्द]प्रयोगकरणात् पुनर्वचनमिति व्यपदेशो भवत्येव । अतिशये 'पुनः' शब्दो विवक्षित इति प्रतिज्ञा पक्षस्तस्य पुनर्वचनं घटत एव ।

लिङ्गवाक्यार्थवादिनस्तु प्रतिज्ञायतेऽनेनेति प्रतिज्ञा लिङ्गं तस्य पुनर्वचनं प्रत्याम्नाय इति ।

उदाहरणन्तु *तस्माद् द्रव्यमेवेति* । एतेन अद्रव्यत्वप्रतिपादक-प्रमाणाभावोऽप्युपदर्शित एव ।

अथ व्यर्थं प्रत्याम्नायवचनम्, सम्बन्धाभिधानादेव विवक्षितार्थप्रसिद्धेः । तदुक्तम्,

'[1]डिण्डिकरागं परित्यज्याक्षिणी निमील्य चिन्तय तावत् किं इयतार्थ-प्रतिपत्तिर्भवति नवेति । यदि इह भवति किमनया शब्दमालया ? न भवतीति न वाच्यं दृष्टत्वात्' ( हेतुविन्दुः, बड़ोदा, पृष्ठ. ५६ )

नैतदेवं, प्रतिज्ञावचनं विना अन्वयव्यतिरेकाप्रसिद्धौ सम्बन्धाभिधान-स्यागमकत्वेन पूर्वमेव व्यवस्थापितत्वात्

**न ह्येतस्मिन्नसति परेषामवयवानां समस्तानां व्यस्तानां वा तदर्थ-वाचकत्वमस्ति । गम्यमानार्थत्वादिति चेन्न, अतिप्रसङ्गात् । तथाहि, प्रतिज्ञानन्तरं हेतुमात्राभिधानं कर्तव्यम्, विदुषामन्वयव्यतिरेकस्मरणात् तदर्थावगतिर्भविष्यतीति । तस्मादत्रैवार्थपरिसमाप्तिः ।**

---

१. डिण्डिका नग्नाचार्याः । ते निष्फलमुपर्युपरि* नामलेखने प्रसक्तास्ततस्तेषामिव 'परेणोक्ते तस्योपरि मया अवश्यमुक्ततया निष्फलमपि अभिधानीयम् इत्यस्थानाभिनिवेशं त्यक्त्वा अक्षिणी निमील्य बहिर्विक्षेपमुपसंहृत्य चिन्तय तावत् किमियता पक्षधर्मसम्बन्धवचनमात्रकेण वाक्येन साध्यस्य प्रतीतिः स्यान्नवेति । भावे प्रतीतेः, किं प्रपञ्चमालया प्रतिज्ञोपनयनिगमन-लक्षणया, बालप्रतारकतदुपयोगवर्णनलक्षणया वा । ( अर्चटभट्ट कृता हेतुविन्दुटीका, वड़ोदा, पृ. ७१, पं. १-१४ ।

* उपरीति । प्रकरणादन्यकृतस्य नाम्न इति द्रष्टव्यम् । तथाहि ते कस्यचिद् राजपुत्रस्य महामात्रस्य वा योगिनान्येन सजातीयेन कृतं नाम श्रुत्वा अहोपुरुषिकया धनाशया चोदिता अन्यथा वा तदुत्साहवर्धनं नाम कृत्वा तल्लिखितुं प्रयुञ्जतेऽत एव नामलेखनमिति णिचा निर्दिष्टम् । ( दुर्वेकमिश्रकृतहेतुविन्दुटीकाटीका आलोकः, वड़ोदा, पृ. ३२०, पं. ७-१० ।

**कथम् ? अनित्य शब्दः इत्यनेन अनिश्चितानित्यत्वमात्रविशिष्टः शब्दः कथ्यते । प्रयत्नानन्तरीयकत्वादित्यनेन अनित्यत्वसाधनं धर्ममात्रमभिधीयते । इह यत् प्रयत्नानन्तरीयकं तदनित्यं दृष्टम्, यथा घट इत्यनेन साध्यसामान्येन साधनसामान्यस्य अनुगममात्रमुच्यते । नित्यम् अप्रयत्नानन्तरीयकं दृष्टम्, यथा आकाशम् इत्यनेन साध्याभावेन [सह] साधनस्य असत्त्वं प्रदर्श्यते । तथा च प्रयत्नानन्तरीयकः शब्दो दृष्टः, न च तथा आकाशवदप्रयत्नानन्तरीयकः शब्द इत्यन्वयव्यतिरेकाभ्यां दृष्टसामर्थ्यस्य साधनसामान्यस्य शब्देऽनुसन्धानं गम्यते । तस्माद् अनित्यः शब्द इत्यनेन अनित्य एव शब्द इति प्रतिपिपादयिषितार्थपरिसमाप्तिर्गम्यते ।**

**तस्मात् पञ्चावयवेनैव वाक्येन परेषां स्वनिश्चितार्थप्रतिपादनं क्रियत इत्येतत् परार्थानुमानं सिद्धमिति ।**

अथ प्रतिज्ञादेरेवार्थप्रतिपादकत्वमस्तु, किं प्रत्याम्नायेन, तथाहि, प्रतिज्ञावचनैर्विषयव्यवस्थापनाद् हेतूदाहरणाभ्यां वहिर्व्याप्तिप्रसिद्धौ उपनयेनान्तर्व्याप्त्युपदर्शने सति अवश्यमभिप्रेतार्थसिद्धिरिति । सत्यमेतत्, तथापि अवश्यम्भाविनोऽर्थस्य प्रतिज्ञादिना प्रतिपादितस्य प्रतिपादनार्थमवश्यं कार्यं निगमनमित्याह *न ह्येतस्मिन्* इति । न पूर्वेषामवयवानां समस्तानां तदर्थवाचकत्वमस्ति । व्यस्तानामितरेतरव्यावृत्तस्वार्थव्यवस्थापने चरितार्थत्वमित्यन्यदतो वाच्यं यस्य सहकारिणां पूर्वपदानां समस्तानामपि स्मृत्युपस्थापितानां वाक्यार्थप्रतिपादकत्वमिति ।

अथ साधनस्य अन्तर्व्याप्तिबहिर्व्याप्त्यभिधाने सति साध्यविशेषो गम्यत एवेत्याह *गम्यमानार्थत्वादिति चेन्न, अतिप्रसङ्गात् । तथाहि, प्रतिज्ञानन्तरं हेतुमात्राभिधानं कर्तव्यम्* स्वत एव विदुषां हेतूपलम्भे सति अन्वयव्यतिरेकानुस्मरणं, तस्माच्चार्थाधिगतिर्भविष्यतीति विशेषाभिधानवैयर्थ्यं स्यात् ।

अथ परं प्रतिपादयता वचनेनैव प्रतिपादनं कार्यमिति शेषाणां प्रयोगः ? तर्हि वाक्यार्थप्रतिपादनार्थं निगमनमपि कार्यम् । न च प्रतिपाद्याभिप्रायेण प्रयोगो युक्तः, तस्य मनुष्यधर्मणा साक्षादप्रतीतेरव्यवस्थापनाच्च । तथाहि,

कश्चिदेकस्मादेव अवयवादर्थं प्रतिपद्यते, कश्चिद् द्वाभ्याम्, अन्यस्त्रिभिरित्यनवस्थितत्वात् प्रतिपाद्यानां तदभिप्रायानिश्चये प्रयोगानुपपत्तिरेव स्यात्। अतः परं प्रतिपादयता स्वप्रतिपत्त्युपायोपदर्शनं कार्यमिति पञ्चानां प्रयोगो युक्तः। तथाहि, प्रदेशस्थं धूममुपलभ्य अविनाभावसम्बन्धं स्मृत्वा तथा चायं धूमवानिति परामृशति, ततः साध्यं प्रतिपद्यते तस्मादग्निमानिति निगमनार्थस्याप्युपलब्धेः परप्रतिपादनाय तदुपन्यासो युक्त एवेति पञ्चानां प्रयोगः कार्य इत्याह भाष्यकारः *तस्मादत्रैवार्थपरिसमाप्तिः* इति।

अन्ये तु अन्तर्व्याप्तिप्रतिपादनार्थं निगमनमिति मन्यन्ते। अनुसन्धानात् पक्षव्यापकत्वप्रसिद्धौ विपरीतप्रसङ्गप्रतिषेधार्थं निगमनमिति।

विपरीतार्थव्यवस्थापकप्रमाणस्याप्रामाण्योपदर्शने सति पक्षे व्याप्तिः प्रतीयत एव। यत्र च परपक्षाप्रतिषेधस्तत्र हेतोर्न गमकत्वम्। यथा मूर्खोऽसौ तत्पुत्रत्वात् उपलभ्यमानतत्पुत्रवदिति। अत्र हि तत्पुत्रस्य अमूर्खत्वे न किञ्चिद् बाधकमस्तीति तत्साधकप्रमाणाभावश्च निश्चित एवेति अन्यथासिद्धं साधनमेतत्।

अथाविनाभूतस्य प्रमाणविरोधाभावान्न युक्तं विपरीतप्रमाणस्याप्रामाण्योपदर्शनमिति चेन्न, तदन्तरेणाविनाभावस्यैवाप्रसिद्धेः। तथाहि, नित्यत्वप्रतिपादकप्रमाणस्य प्रामाण्ये सति न शब्दे कृतकत्वस्यानित्यत्वेन व्याप्तिः स्यादिति। न च परपक्षप्रतिषेधकादेव स्वपक्षसिद्धिः, व्यधिकरणत्वात्, हेतोरपि वैयर्थ्यप्रसङ्गाच्चेति। परपक्षप्रतिषेधे तूपदर्शितबहिर्व्याप्तिकं पक्षे चोपलभ्यमानं भवत्येव साधनमिति निगमनप्रयोगः कार्यः।

अथ प्रतिज्ञावचनमेव परपक्षप्रतिषेधसहायं साधनमिति चेन्न, तस्य साध्यमात्राभिधायकत्वात्, साध्यम् इति अर्हत्यर्थे, शक्यार्थे वा कृ[त्य?ता]भिधानात् कथं तद्वचनात् तस्य सिद्धिः? तस्माद् बहिर्व्याप्तिवदन्तर्व्याप्तिं समर्थयता अबाधितविषयत्वासत्प्रतिपक्षत्वप्रतिपादनार्थमेव अवयवान्तरमभिधेयम्।

अथ प्रकरणसमकालात्यापदिष्टयोरपि बहिर्व्याप्तिसद्भावात् गमकत्वं स्यात्, अस्ति च तयोः पक्षव्यापकत्वे सत्यन्वयव्यतिरेकसद्भाव इति? अयुक्त

[मेतत्,] तादात्म्यतदुत्पत्तिलक्षणप्रतिबन्धायत्तस्तु अव्यभिचारो न भवतीत्युक्तं व्याप्तिसमर्थनावसरे। तस्मादुक्तन्यायेन अत्रैवार्थपरिसमाप्तिरिति।

एवं विभिन्नप्रकरणेषु अवयवानां स्वरूपोपदर्शनेऽपि एकत्र तत्स्वरूपपरिज्ञानापेक्षया प्रश्नः *कथम्* इति। *अनित्यः शब्द इत्यनेन अनिश्चितानित्यत्वमात्रविशिष्टः शब्दः कथ्यते* इति प्रतिज्ञैषा। *प्रयत्नानन्तरीयकत्वादित्यनेन अनित्यत्वसाधनधर्ममात्रमभिधीयते* न तु समर्थमिति हेतुवचनम्। *इह यत् प्रयत्नानन्तरीयकं तदनित्यं दृष्टं यथा घट इत्यनेन साध्यसामान्येन (सह ?) साधनसामान्यस्यानुगममात्रमुच्यते* इति साधर्म्योदाहरणम्। *नित्यम् अप्रयत्नानन्तरीयकं दृष्टं यथा आकाशम् इत्यनेन साध्याभावेन [सह] साधनस्यासत्त्वं [व्याख्यायते ? प्रदर्श्यते]* इति वैधर्म्योदाहरणम्। *तथा च प्रयत्नानन्तरीयकः शब्दः* न च तथा प्रयत्नानन्तरीयको न भवतीति, *अन्वयव्यतिरेकाभ्यां दृष्टसामर्थ्यस्य साधनसामान्यस्य शब्देऽनुसन्धानं गम्यते*। *तस्मादनित्यः [एव ? शब्दः] इत्यनेन अनित्य एव शब्द इति प्रतिपिपादयिषितार्थपरिसमाप्तिर्गम्यते* इत्यभिप्रेतार्थसिद्धिर्भवतीति। अतः *पञ्चावयवेनैव वाक्येन परेषां स्वनिश्चितार्थप्रतिपादनं क्रियते* इति सिद्धम्।

अत्र च शब्दविशेषस्य पक्षीकरणे प्रयत्नानन्तरीयकत्वं साधनं विवक्षितमिति ज्ञेयम्। अन्यथा हि शब्दमात्रपरिग्रहे प्रयत्नानन्तरीयकत्वं भागासिद्धं स्यात्। न हि प्रयत्नानन्तरं सर्वशब्दानां जन्मास्तीति।

निर्णयवैधर्म्यम्

**विशेषदर्शनजमवधारणज्ञानं संशयविरोधी निर्णयः। एतदेव प्रत्यक्षमनुमानं वा। यद्विशेषदर्शनात् संशयविरोध्युत्पद्यते स प्रत्यक्षनिर्णयः। यथा स्थाणुपुरुषयोरूर्ध्वतामात्रसादृश्यालोचनाद् विशेषेष्वप्रत्यक्षेषु उभयविशेषानुस्मरणात् किमयं स्थाणुः पुरुषो वेति संशयोत्पत्तौ [सत्यां?] शिरःपाण्यादि [विशेष?] दर्शनात् पुरुष एवायमित्यवधारणज्ञानं प्रत्यक्षनिर्णयः।**

**विषाणमात्रदर्शनाद् गौर्गवयो वेति संशयोत्पत्तौ सास्नामात्रदर्शनाद् गौरेवायमित्यवधारणज्ञानमनुमाननिर्णयः ।**

अथ निर्णयो विद्यान्तरमिति केचित् । तन्निषेधार्थं *विशेषदर्शनजम्* इत्यादि प्रकरणम् । परार्थानुमानानन्तरमस्यान्तर्भावनिरूपणमत्रापि अन्तर्भावज्ञापनार्थम् । निर्णय इति लक्ष्यनिर्देशोऽवशिष्टं लक्षणम् । अवधारणज्ञानं हि विपर्ययज्ञानमपि भवति न तु विशेषदर्शनाज्जायते । विशेषदर्शनजं [चोभ ? च संश] यज्ञानमपीत्यवधारणग्रहणम् ।

तथापि विशेषदर्शनजमवधारणज्ञानं निर्णय इत्युक्ते व्यभिचाराभावाद् व्यर्थं संशयविरोधीति पदम् ? न, विशिष्टनिर्णयलक्षणार्थत्वात् । यद्यपि विशेषदर्शनजमवधारणज्ञानमिति सकलनिर्णयव्यापीदं सामान्यलक्षणं तथापि संशयविरोधीति पदं संशयपूर्वकस्य निर्णयस्य लक्षणार्थम् । तथा च नैयायिकैरुक्तं 'विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः' (न्या. सू. १।१।४१) इति संशयपूर्वकस्य लक्षणम् । विमृश्येति विमर्शं कृत्वा, पक्षप्रतिपक्षाभ्यामिति तद्वचनाभ्याम्, स पुनः साधनदूषणाभ्यां निर्णय इति ।

अथ विशेषदर्शनात् संशयो व्यावर्तते, न निर्णयादिति कथं तद्विरोधित्वम् ? उपचारेण, निर्णयकारणस्य संशयविरोधित्वात् निर्णयस्तद्विरोधीत्युक्तम् ।

अस्यान्तर्भावमाह *एतदेव प्रत्यक्षमनुमानं वा* न ज्ञानान्तरम् । प्रत्यक्षसामग्रीजन्यं हि प्रत्यक्षमनुमानसामग्रीजन्यन्तु अनुमानमिति । *यद् विशेषदर्शनात् संशयविरोध्युत्पद्यते स निर्णयः* इति प्राक्तनस्य विवरणम् ।

अत्र *स्थाणुपुरुषयोरूर्ध्वतामात्रसादृश्यालोचनाद् विशेषेष्वप्रत्यक्षेषूभयविशेषानुस्मरणात्* [किमयं] स्थाणुः पुरुषो वेति संशयोत्पत्तौ सत्यां शिरःपाण्यादिविशेषदर्शनात् पुरुष एवायमित्यवधारणज्ञानम् *इन्द्रियार्थसन्निकर्षादुत्पत्तेः प्रत्यक्षनिर्णयः* । *विषाणमात्रदर्शनात्* इति पिण्डव्यवधानेऽपि सादृश्यविशिष्टविषाणदर्शनात् । *गौर्गवयो वेति संशयोत्पत्तौ* सत्याम् । *सास्नामात्रदर्शनात्* अविनाभावसम्बन्धस्मरणे सति परामर्शज्ञानानन्तरम् । *गौरेवायमित्यवधारणज्ञानं अनुमाननिर्णयः* ।

**स्मृतिवैधर्म्यम्**

**लिङ्गदर्शनेच्छानुस्मरणाद्यपेक्षादात्ममनसोः संयोगविशेषात् पट्वभ्यासादरप्रत्ययजनिताच्च संस्काराद् दृष्टश्रुतानुभूतेष्वर्थेषु शेषानुव्यवसायानुस्मरणेच्छाद्वेषहेतुरतीतविषया स्मृतिरिति ।**

अथ स्मृतेः कार्यकारणविषयस्वरूपनिरूपणार्थं *लिङ्गदर्शनेच्छा[नु]स्मरणाद्यपेक्षात्* इत्यादि प्रकरणम्। [*लिङ्गदर्शनेच्छानुस्मरणाद्यपेक्षात्*] लिङ्गदर्शनञ्च इच्छा च अनुस्मरणञ्चेति तथोक्तानि, तान्यादिर्येषामित्यादिपदेन प्रणिधानादेर्ग्रहणम्, तान्यपेक्षत इति तदपेक्षस्तस्मात् । *आत्ममनसोः संयोगविशेषात्* इत्यसमवायिकारणनिर्देशः । लिङ्गदर्शनेच्छानुस्मरणाद्यपेक्षात् *पट्वभ्यासादरप्रत्ययजनिताच्च संस्कारात्* इति निमित्तकारणनिर्देशः । *दृष्टश्रुतानुभूतेष्वर्थेषु* इति दृष्टः प्रत्यक्षेण, श्रुतः शब्देन, अनुभूतोऽनुमानेन ।

अन्ये तु दृष्टश्चक्षुषा, अनुभूतस्त्वगिन्द्रियेणेति ।

तत्र लिङ्गं दर्शयति *शेषानुव्यवसायानुस्मरणेच्छाद्वेषहेतुः* इति । उपयुक्ताल्लिङ्गाद् अनुमेयः शेषः, सोऽनुव्यवसीयते अनेनेति शेषानुव्यवसायः परामर्शज्ञानम्, तस्य हेतुरविनाभावसम्बन्धस्मरणम्, तथा पदस्मरणाद् वाक्यस्मरणम्, सुखस्मरणादिच्छा दुःखस्मरणाद् द्वेष इति । *अतीतविषया* इति स्वरूपकथनम् । अतीतो विषयो यस्याः सा तथोक्तेति ।

नन्वयुक्तमेतत्, विद्यमानेऽपि वस्तुनि स्मरणस्य दर्शनादित्यव्याप्तिः, अतिव्याप्तिश्च अनुमानादेरतीतविषयत्वादिति ।

अथ चोदनैव भूतं भविष्यन्तं विप्रकृष्टादिकमर्थं प्रकाशयति नान्यत् किञ्चन इन्द्रियादिकमिति चेन्न, अनुमानस्यापि अतीताद्यर्थप्रकाशकत्वेनोपलम्भात्। तथा च, मेघोन्नत्या भविष्यति वृष्टिरित्यनुमीयते, नदीपूराच्च विशिष्टाद् उपरिष्टाद् वृष्टिरित्युक्तम् । प्रत्यक्षञ्चात्र अविनाभावग्राहकमभ्युपेयम्, अन्यथा व्याप्तिग्रहणाभावेऽनुमानमेव न प्रवर्तेत । न चानुमानेनैवाविनाभावग्रहणम्, अनवस्थाप्रसङ्गात् । वर्तमानेन चाविनाभावग्रहणे कथम् अतीता-

द्यर्थानुमानं स्यात्, अन्येनाविनाभावग्रहणेऽन्यस्यानुमितौ अतिप्रसङ्गात् । तस्मादतीतविषयत्वं व्याख्येयमुपचारेण । यत्र हि विषयेऽनुभवोऽतीतस्तत्र स्मृतिरुत्पद्यत इति ।

अन्ये तु अतीतो व्यवहितो विषयो यस्यानुभवस्यासौ अतीतविषयः, स विषयो यस्याः सा अतीतविषयेति प्राप्ते सति एकस्य विषयस्य लोपो द्रष्टव्य इत्यतीतानुभवविषयत्वं लभ्यत इति मन्यन्ते ।

अथ अर्थजत्वमेव स्मृतेः कस्मान्नेष्यते ? अर्थविनाशेऽप्युत्पादात् । न च यद्देशकालालिङ्गितेऽनुभवज्ञानमुत्पन्नं तदालम्बनमेव न्याय्यम्, स्मृति- काले तस्याविद्यमानतया विषयत्वाभावात् । बाह्येन्द्रियाणाञ्च स्मृतिजन्मनि प्रत्येकं व्यभिचारादन्तःकरणस्य व्यापारो निश्चीयते । न च तस्य स्वात- न्त्र्येण बहिर्विषये व्यापारः सम्भवतीति अनर्थजत्वमेव न्याय्यम् । अवश्यञ्च अर्थजत्वे सति अव्यभिचारित्वादिधर्मोपेतत्वात् प्रमारूपतायां स्मृतेः प्रमाणा- दुत्पत्तिर्वाच्या । अनुमानादेश्च व्यापारानुपलब्धेरन्तःकरणस्य स्वातन्त्र्येण तदुत्पत्तौ प्रामाण्ये सति स्मृतेरपरोक्षत्वं स्यात्, न चैतदस्ति, तस्मान्निर्विष- यत्वमेव ।

**आर्षज्ञानवैधर्म्यम्**

**आम्नायविधातॄणामृषीणामतीतानागतवर्तमानेष्वतीन्द्रियेषु धर्मा- दिषु ग्रन्थोपनिबद्धेष्वनुपनिबद्धेषु च आत्ममनसोः संयोगाद् धर्मविशे- षाच्च यत् प्रातिभं यथात्मनिवेदनं ज्ञानमुत्पद्यते तद् आर्षमित्याचक्षते । तत्तु प्रस्तारेण देवर्षीणाम्, कदाचिदेव लौकिकानाम्, यथा कन्यका ब्रवीति श्वो मे भ्राता आगन्तेति हृदयं मे कथयतीति ।**

अथ आर्षज्ञानस्य कारणविषयप्रमाणनिरूपणार्थम् * आम्नायविधातॄ- णाम् * इत्यादि प्रकरणम् । आम्नायो वेदः श्रुतिस्मृतिलक्षणः, तस्य विधा- तारः कर्तारः, तेषामृषीणामुत्पद्यते * यत् प्रातिभं ज्ञानम् * इति प्रतिभया संस्कारविशेषेण निर्वर्त्तितम् । * यथात्मनिवेदनम् * यथा तस्य पदार्थ- स्यात्मा स्वरूपं तन्निवेदनम् तदालम्बनमुत्पद्यते * तद् आर्षमित्याचक्षते * ।

केष्वर्थेषूत्पद्यते ? *अतीतानागतवर्तमानेषु*। किंविशिष्टेषु ? *अतीन्द्रियेषु धर्मादिषु* आदिपदेन परमाण्वादेर्ग्रहणमिति । *ग्रन्थोपनिबद्धेष्वनुपनिबद्धेषु च* ग्रन्थोपनिबद्धेषु[आत्मादिषु], अनुपनिवद्धेषु च [परमाण्वादिषु]इयान् धर्म इति । कुतः कारणादेषु यथार्थविज्ञानम् ? *आत्ममनसोः संयोगात्* असमवायिनः *धर्मविशेषाच्च* निमित्तादिति । *तत्तु प्रस्तारेण* ऋषीणामतस्तदार्षम् । तत्तु कदाचिदेव लौकिकानामप्यर्षीणामेवंविधं विज्ञानमस्तीति । किम[स्मदादीनां?त्र] प्रमाणमित्याह *कदाचिदेव लोकिकानाम्* तत् प्रातिभं ज्ञानमिति । *यथा कन्यका ब्रवीति श्वो मे भ्राता आगन्तेति*। न चेन्द्रियजं तत्, [तद्]व्यापारं विनाप्युत्पत्तेः ।

अथ बाह्येन्द्रियाणां व्यापारासम्भवेऽपि अन्तःकरणस्य व्यापारात् प्रत्यक्षफलत्वम् । सम्बन्धोऽपि इन्द्रियेण सह भ्रातुः संयुक्तविशेषणविशेष्यभावः । तथाहि, तद्विशिष्टमात्मानं देशं कालं वा आलम्ब्योत्पद्यते ज्ञानमेतद् इत्युक्तं परैः । तच्चासत्, अस्यापरोक्षत्वा[नुप?]पत्तेः । यत्र हि अपरोक्षज्ञानं तत्रैव इन्द्रियव्यापारकल्पना क्रियते । न चात्र तदस्तीति । न च बहिर्विषये विशेषणेऽपि मनसः स्वातन्त्र्येण व्यापारः सम्भवतीत्युक्तम् । लिङ्गलिङ्गिसम्बन्धानुस्मरणाननुभवाच्च नानुमानजम् । शब्दं विनाप्युत्पत्तेर्न शाब्दम् । अतः प्रमाणान्तरफलमेतत् । तथा प्रश्ने कृते सति न प्रत्यक्षादिकं निर्दिशति, अपि तु *हृदयं मे कथयतीति* ब्रूते ।

अथ कस्मात् प्रत्यक्षानुमानानन्तरमार्षज्ञानस्य न निरूपणम् ? अस्मदादीनां तेन व्यवहाराभावात् । यतस्तत्तु प्रस्तारेण ऋषीणामेव, कदाचिदेव लौकिकानामिति ।

**सिद्धदर्शनस्य विद्यान्तरत्वनिरासः**

**सिद्धदर्शनं न ज्ञानान्तरम् । कस्मात् ? प्रयत्नपूर्वकम् अञ्जनपादलेपखड्गगुलिकादिसिद्धानां दृश्यद्रष्टॄणां सूक्ष्मव्यवहितविप्रकृष्टेष्वर्थेषु यद् दर्शनं तत्प्रत्यक्षमेव । अथ दिव्यान्तरिक्षभौमानां प्राणिनां ग्रहनक्षत्रसञ्चारादिनिमित्तं धर्माधर्मविपाकदर्शनमिष्टं तदप्यनुमानमेव । अथ**

**लिङ्गानपेक्षं धर्मादिषु दर्शनमिष्टं तदपि प्रत्यक्षार्षयोरन्यतरस्मिन् अन्तर्भूतमित्येवं बुद्धिरिति ।**

सिद्धदर्शनं विद्यान्तरमिष्टं परैस्तन्निषेधार्थमाह *सिद्धदर्शनं न ज्ञानान्तरम्* इति । आर्षज्ञानानन्तरमस्य अन्तर्भावनिरूपणम् आर्षेऽप्यन्तर्भावार्थम् । यत् सिद्धानां दर्शनमुत्पद्यते तत्प्रत्यक्षमेव । केष्वर्थेषु ? *सूक्ष्मव्यवहितविप्रकृष्टेषु* इति । सूक्ष्माः परमाणवः, व्यवहिता नागभुवनादयोऽस्मदादीन्द्रियापेक्षया । न तु सिद्धेन्द्रियाणां व्यवधायकमस्ति । विप्रकृष्टा मेर्वादयः, तेषु । सिद्धानां किं विशिष्टानाम् ? मुक्तात्मव्यवच्छेदार्थं *दृश्यद्रष्टृणाम्* इति । किञ्च तेषां सद्भावे प्रमाणमित्याह *दृश्यानाम्* । कदाचिद् अञ्जनादिवियुक्ताः प्रत्यक्षेणाप्युपलभ्यन्ते । का पुनस्तेषां सिद्धिरित्याह *अञ्जनपादलेपखड्गगुलिकादिसिद्धानाम्* इति । आदिपदेन चिन्तामणिप्रभृतीनां ग्रहणम् । अञ्जनादिवशाच्च सिद्धेन्द्रियाणां सूक्ष्माद्यर्थप्रकाशनम्, अतः *तत् प्रत्यक्षमेव* [न] ज्ञानान्तरमिति ।

अथ ज्योतिषामयनं दृष्ट्वा प्राणिनां शुभमशुभं वा भविष्यतीति ज्ञानं प्रमाणान्तरमिष्टं तन्निषेधार्थम् *दिव्यान्तरिक्षभौमानाम्* इत्यादि । दिवि भवं दिव्यमुल्कापातादि, अन्तरिक्षे भवञ्चान्तरिक्षं दिग्दाहादि, भूमौ भवं भौमं भूसञ्चलनादि, तेषाम् । *ग्रहनक्षत्रसञ्चारादिनिमित्तम्* उपलभ्य प्राणिनां धर्माधर्मयोर्विपाकः फलदानसामर्थ्यं तद्दर्शनं[न] ज्ञानान्तरमिष्टम् *तदप्यनुमानमेव* लिङ्गदर्शनानु[बन्ध]स्मरणादिजन्यत्वात् ।

यद् वा दिव्यान्तरिक्षभौमानां सुरसिद्धमनुष्याणां प्राणिनां ग्रहनक्षत्रसञ्चारादिनिमित्तमुपलभ्य धर्माधर्मयोर्विपाकदर्शनमिष्टं तदप्यनुमानमेवेति ।

अथ लिङ्गानपेक्षं धर्माधर्मादिषु दर्शनमिष्टं तदपि यदि इन्द्रियार्थसन्निकर्षादपरोक्षमुत्पद्यते प्रत्यक्षमेव । अथेन्द्रियार्थसन्निकर्षं विनैव धर्मविशेषादुत्पद्यते तथाप्यार्षमित्याह *प्रत्यक्षार्षयोरन्यतरस्मिन्नन्तर्भूतमिति* । *एवं बुद्धिरिति* उपसंहारः परोपगताया बुद्धेर्विनाशपर इति ।

**सुखवैधर्म्यम्**

**अनुग्रहलक्षणं सुखम् । स्रगाद्यभिप्रेतविषयसान्निध्ये सति इष्टोप-**

**लब्धीन्द्रियार्थसन्निकर्षाद् धर्माद्यपेक्षाद् आत्ममनसोः संयोगाद् अनुग्रहाभिष्वङ्गनयनादिप्रसादजनकमुत्पद्यते तत् सुखम् । अतीतेषु विषयेषु स्मृतिजम् । अनागतेषु सङ्कल्पजम् । यत्तु विदुषाम् असत्सु विषयानुस्मरणेच्छासङ्कल्पेष्वाविर्भवति तद् विद्याशमसन्तोषधर्मविशेषनिमित्तमिति ।**

अथ बुद्धेरनन्तरं सुखस्य कार्यकारणस्वरूपोपदर्शनार्थम् * अनुग्रहलक्षणं सुखम् * इत्यादि । अनुग्रहलक्षणमनुग्रहस्वरूपम् । यस्मिन्नुत्पन्ने सति आत्मा अनुगृहीतमात्मानं मन्यत इति । * स्रगाद्यभिप्रेतविषयसान्निध्ये सति * इति । स्रगादयश्च ते अभिप्रेतविषयाश्चेति तेषां सान्निध्यम् । अनभिप्रेता रागादयः सुखहेतवो न भवन्तीति अभिप्रेतग्रहणम् । इष्टोपलब्धिश्च इन्द्रियार्थसन्निकर्षश्चेति तथोक्तं तस्मात् । धर्माद्यपेक्षादित्यादिपदेन दिक्कालादेर्ग्रहणम् । तान्यपेक्षत इति तदपेक्षस्तस्मात् । इष्टोपलब्धीन्द्रियार्थसन्निकर्षाद् धर्माद्यपेक्षाद् आत्ममनसोः संयोगात् असमवायिकारणाद् आत्मनि सुखमुत्पद्यते । * अनुग्रहाभिष्वङ्गनयनादिप्रसादजनकम् * इति कार्यनिरूपणम् । अनुगृहीतिरनुग्रहः सुखविषयं ज्ञानम्, आसक्तिरभिष्वङ्गः, नयनादिप्रसादः प्रसन्नता । आदिपदेन मुखादिप्रसन्नता गृह्यत इति । तदेतत् असाधारणत्वादितरस्माद् भेदकमिति ज्ञेयम् । न च सर्वं विवेकिनः स्वरूपतो दुःखम्, अनुग्रहात्मकस्य सुखस्याप्यनुभवात् । अतएव न दुःखाभावे सुखव्यवहार इति वाच्यम् । विभिन्नकारणजन्यस्य तीव्रतरादिभेदभिन्नस्य प्रतिभासनात् । एवं दुःखस्यापि न सुखाभावरूपतेति ।

यदेतदुक्तं सुखं तत् सन्निहिते वस्तुनि इन्द्रियार्थसन्निकर्षादुत्पद्यते, अतीतानागतेषु स्मरणसङ्कल्पाभ्यामित्याह * अतीतेषु * सुखसाधनेषु, * स्मृतिजम्, अनागतेषु सङ्कल्पजम् * इत्येतद् हेयमुपदर्शितम् ।

* यत्तु विदुषामसत्सु [विषयानुस्मरणेच्छासङ्कल्पेषु] * विषयानुस्मरणञ्चेच्छा च सङ्कल्पश्चेति तथोक्ताः, तेष्वविद्यमानेष्वाविर्भवति तदुपादेयमेव । * विद्याशमसन्तोषधर्मविशेषनिमित्तम् * इति कारणोपन्यासः । विद्या तत्त्वज्ञानं तस्मात् तत्त्वज्ञानिनां सुखम् । तथा शमो रागादिविनाशः,

तस्माच्च शान्तमनसां सुखम् । सन्तोषो विषयेष्वलम्प्रत्ययः, तस्माच्च सुखम् । केषाञ्चिद् धर्मविशेषाच्चेति ।

अन्ये तु विद्यया जनितः सः शमः, तस्मात् सुखमिति । शेषं पूर्ववत् ।

### दुःखवैधर्म्यम्

**उपघातलक्षणं दुःखम् । विषाद्यनभिप्रेतविषयसान्निध्ये सति अनिष्टोपलब्धीन्द्रियार्थसन्निकर्षाद् अधर्माद्यपेक्षादात्ममनसोः संयोगाद् यद् अमर्षोपघातदैन्यनिमित्तमुत्पद्यते, तद् दुःखम् । अतीतेषु सर्पव्याघ्रचौरादिषु स्मृतिजम् । अनागतेषु सङ्कल्पजमिति ।**

दुःखनिरूपणार्थमाह * उपघातलक्षणम् * उपघातस्वरूपं दुःखमिति । उपहन्यतेऽनेनेति उपहतमात्मानं मन्यत इति । कारणमाह [ * विषाद्यनभिप्रेतविषयसान्निध्ये सति * ] विषादयश्च तेऽनभिप्रेतविषयाश्चेति, तेषां सान्निध्ये सतीति । अभिप्रेताश्च विषयादयः सुखहेतव एवेत्यनभिप्रेतग्रहणम् । [ * अनिष्टोपलब्धीन्द्रियार्थसन्निकर्षादधर्माद्यपेक्षात् * ] अनिष्टोपलब्धिश्च इन्द्रियार्थसन्निकर्षश्चेति तथोक्तः, तस्मादधर्मापेक्षादित्यादिपदेन दिक्कालादेर्ग्रहणम् । तस्मादनिष्टोपलब्धीन्द्रियार्थसन्निकर्षाद् अधर्माद्यपेक्षादात्ममनसोः संयोगादसमवायिकारणाद् आत्मनि समवेतं यद् उत्पद्यते तद् दुःखम् । अमर्षोपघातदैन्यानां निमित्तं कारणम्, तदितरस्माद् भेदकमिति ज्ञेयम् । अतीतेषु सर्पादिष्विति कार्यनिरूपणम् । अमर्षोऽसहिष्णुता, उपहतिरुपघातो दुःखालम्बनं ज्ञानमिति । दैन्यं दीनरूपता दुःखादुत्पद्यत इति । तदेतद् असाधारणत्वाद् इतरस्माद् भेदकमिति ज्ञेयम् । * अतीतेषु सर्पव्याघ्रचौरादिषु * दुःखसाधनेषु, * स्मृतिजम्, अनागतेषु सङ्कल्पजमिति * ।

### इच्छावैधर्म्यम्

**स्वार्थं परार्थं वा अप्राप्तप्रार्थनेच्छा । सा चात्ममनसोः संयोगात् सुखाद्यपेक्षात् स्मृत्यपेक्षाद् वा उत्पद्यते । प्रयत्नस्मृतिधर्माधर्महेतुः । कामोऽभिलाषः, रागः सङ्कल्पः, कारुण्यम्, वैराग्यम्, उपधा, भाव इत्येवमादय इच्छाभेदाः । मैथुनेच्छा कामः, अभ्यवहारेच्छा अभिलाषः, पुनः**

**पुनर्विषयानुरञ्जनेच्छा रागः, अनासन्नक्रियेच्छा सङ्कल्पः, स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा कारुण्यम्, दोषदर्शनाद् विषयत्यागेच्छा वैराग्यम्, परवञ्चनेच्छा उपधा, अन्तर्निगूढेच्छा भावः। चिकीर्षाजिहीर्षेत्यादि-क्रियाभेदाद् इच्छाभेदा भवन्ति।**

इच्छायाः कार्यकारणस्वरूपनिरूपणार्थं * स्वार्थं परार्थं वा * इत्यादि। अप्राप्ते वस्तुनि प्रार्थनारूपत्वादिच्छेति। स्वार्थं परार्थं वेति विप्रतिपत्ति-निरासार्थं विभागकथनम्, न केवलं स्वार्थमेव परार्थमपि। उत्पत्ति-कारणमाह * सा चात्ममनसोः संयोगात् * असमवायिकारणादुत्पद्यते। किमपेक्षात्? * सुखाद्यपेक्षात् स्मृत्यपेक्षाद् वा * इति। * प्रयत्नस्मृति-धर्माधर्महेतुः * इति कार्यनिरूपणम्। शुद्धाभिसन्धिर्धर्महेतुर्दुष्टाभिसन्धि-श्चाधर्महेतुरिति।

अन्येऽपि गुणाः कामादयः सन्ति [च शब्दे ? ते च] किं न सूचिता इति चोद्यस्य परिहारार्थमन्तर्भावं निरूपयति * कामोऽभिलाषो रागः सङ्कल्पः कारुण्यं वैराग्यम् उपधा भाव इत्येवमादय इच्छाभेदाः * तद्विशेषा इति। मैथुनेच्छा कामः, तत्सद्भावे कामीति व्यपदेशात्, नेच्छामात्रमिति। अभ्यव-हरणेच्छा अभिलाषः, अभिलाषलक्षणेच्छा। सामान्येन सर्वस्मिन् वस्तुनि अभ्यवहरणमादानं विवक्षितम्। तदिच्छा अभिलाष इति चान्ये। * पुनः पुनर्विषयानुरञ्जनेच्छा रागः * तेन हि सता रागीति व्यपदेशात्। अनासन्न-क्रियायाम् अनागतक्रियायामिच्छा सङ्कल्पः। * स्वार्थमनपेक्ष्य परदुःखप्रहा-णेच्छा * तद्विनाशेच्छा कारुण्यम्। दोषदर्शनाद् विषयेषु परित्यागेच्छा वैराग्यम्। तत् सद्भावे विरक्तव्यवहारात्। * परवञ्चनेच्छा उपधा। अन्तर्निगूढेच्छा भावः * इति। यद्यपि इच्छा सर्वा अन्तर्न बाह्येति; तथापि इयमन्यापेक्षया कथञ्चिद् विज्ञायत इत्यन्तर्निगूढेत्युच्यते। * चिकीर्षा जिहीर्षेत्यादिक्रियाभेदादिच्छाभेदा भवन्ति * कर्त्तुमिच्छा चिकीर्षा, हर्तुमिच्छा जिहीर्षेति।

**द्वेषवैधर्म्यम्**

**प्रज्वलनात्मको द्वेषः। यस्मिन् सति प्रज्वलितमिवात्मानं मन्यते,**

**स द्वेषः । स चात्ममनसोः संयोगाद् दुःखापेक्षात् स्मृत्यपेक्षाद् वोत्पद्यते । प्रयत्नस्मृतिधर्माधर्महेतुः । द्रोहः, क्रोधः, मन्युरक्षमा अमर्ष इति द्वेषभेदाः ।**

द्वेषनिरूपणार्थमाह[*प्रज्वलनात्मकः*]प्रज्वलनस्वरूपो द्वेषः । *यस्मिन् सति प्रज्वलितमिवात्मानं मन्यते, स द्वेषः* इति पूर्वस्य विवरणम् । *स चात्मनसोः संयोगात्* असमवायिकारणात्, *दुःखापेक्षात् स्मृत्यपेक्षाद् वा* आत्मन्युत्पद्यत इति । *प्रयत्नस्मृतिधर्माधर्महेतुः* इति कार्यनिरूपणम् । यथा हि द्वेषाद् वधादौ प्रवर्त्तमानस्याधर्मो भवत्येवं यजनादौ प्रवर्त्तमानस्य धर्मोऽपीति । भेदनिरूपणार्थमाह *द्रोहः क्रोधो मन्युरक्षमा अमर्ष इति द्वेषभेदाः* तद्विशेषा इति । स्वामिनोऽपकारो द्रोहः, क्रोधस्तु यस्मिन्नुत्पन्ने शरीरेन्द्रियावयवानां विकारः सम्पद्यते । मन्युरपकृतस्यापकर्तुमसमर्थस्य कण्ठाक्षविकारजनकः । अक्षमा असहिष्णुता । अमर्षोऽपकर्तुर्वर्षादिव्यवधानेनाप्य[प]करणम् ।

नन्वेते सुखदुःखेच्छाद्वेषाः कथं विज्ञानाद् व्यतिरिच्यन्ते, समानकारणजन्यत्वाद् अन्तर्मुखाकारतया प्रतीयमानत्वाच्चेति कारणभेदेन हि पदार्था भिद्यन्त इत्युक्तम् । [ तदुक्तम् ]

तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः ।
तत्सुखादि किमज्ञानं विज्ञानाभिन्नहेतुजम् ।।
( प्र. वा. २।२५१) इति ।

तथाहि, केचिद् भावस्तद्रूपिणो धान्यादिरूपिणः, अन्येऽतद्रूपिणस्तद्विधर्माण इति । कस्मात् ? तदतद्रूपहेतुजत्वात् । धान्यरूपात् कारणादुत्पन्नास्तद्रूपिणः, अन्ये तु विलक्षणा अतद्रूपिणः, इत्युक्ते सत्याह यद्येवं तत्सुखादिविज्ञानेनाभिन्नहेतुजं किमज्ञानमिष्टम् ? नैतदेवम्, अभेदे साध्ये समवाय्यसमवायिनिमित्तापेक्षयापि समानकारणजन्यत्वस्य व्यभिचारात् । तथाहि, एकस्मात् समवायिकारणादुत्पद्यन्ते पाकजाः परस्परं विभिन्नाश्चेति । असमवायिकारणन्तु पार्थिवपरमाण्वग्निसंयोगस्तेषामेक एव । तथा एकोऽप्युष्णस्पर्शस्तेषां निमित्तकारणमिति, तदपेक्षयापि व्यभिचारः । सामग्र्यपेक्षया

त्वसिद्धं समानकारणजन्यत्वम्, तस्याः प्रतिकार्यनियतत्वात् । उक्तञ्च एकत्र-स्रगाद्युपलक्षिता सामग्री कारणम्, अन्यत्रान्यथाभूतेति । तथा प्रतिनियतजातेः प्रागभावस्य चानुप्रवेशे सर्वत्र सामग्रीभेदो भवत्येवेति । अन्तर्मुखाकारतया प्रतीयमानत्वञ्च ज्ञानधर्मैर्व्यभिचारीति । अस्ति च धर्मधर्मिणोर्भेद इत्युक्तम् । तथा ज्ञानस्यानुत्पत्तिविनाशाभ्यां व्यभिचारः, तयोरन्तर्मुखाकारतया प्रतीय मानत्वम्, न च बोधरूपतेत्यलमतिप्रसङ्गेन ।

**प्रयत्नवैधर्म्यम्**

**प्रयत्नः संरम्भ उत्साह इति पर्यायाः । स द्विविधो जीवनपूर्वकः, इच्छाद्वेषपूर्वकश्च । तत्र जीवनपूर्वकः सुप्तस्य प्राणापानसन्तानप्रेरकः, प्रबोधकाले च अन्तःकरणस्येन्द्रियान्तरप्राप्तिहेतुः । अस्य जोवनपूर्वकस्य आत्ममनसोः संयोगाद् धर्माधर्मापेक्षादुत्पत्तिः । इतरस्तु हिताहित-प्राप्तिपरिहारसमर्थस्य व्यापारस्य हेतुः, शरीरविधारकश्च । स च आत्ममनसोः संयोगाद् इच्छापेक्षाद् द्वेषापेक्षाद् वोत्पद्यते ।**

अथ प्रयत्नस्य कारणस्वरूपविभागनिरूपणार्थमाह *प्रयत्नः संरम्भ उत्साह इति पर्यायाः* लक्षणम्, असाधारणत्वात् । तथाहि, प्रयत्न इतर-स्माद् भिद्यते, अनादिकालप्रवाहायातेत्थम्भूतपर्यायाभिधेयत्वात्, यस्तु न भिद्यते, न चासावेवम्, यथा रूपादिरिति । स द्विविधः कारणभेदादित्याह *जीवनपूर्वक इच्छाद्वेषपूर्वकश्च* जीवनं पूर्वं कारणमस्येति जीवनपूर्वकः । स कथं विज्ञायत इत्याह *सुप्तस्य प्राणापानसन्तानप्रेरकः* इति । येयं सुप्तस्य प्राणापानसन्तानक्रिया, सा प्रयत्नकार्या[शरीर]क्रियात्वात्, जाग्रद-वस्थायां प्राणक्रियादिवदिति । न परं प्राणादिसन्तानप्रेरकः *प्रबोधकाले चान्तःकरणस्येन्द्रियान्तरेण प्राप्तिहेतुः* इति । यथा हि प्रबोधसमये येनैवेन्द्रियेणोपलम्भस्तेनैव सम्बन्धार्थमन्तःकरणस्य निरिन्द्रियात्मप्रदेशे वर्तमानस्यावश्यं कर्माभ्युपेयम्, तच्च प्रयत्नकार्यं परिगृहीतान्तःकरण-कर्मत्वात्, जाग्रदवस्थायां तत्कर्मवत् । अत एव नादृष्टस्यैवात्र कारणत्वम्, अनुमानेन प्रयत्नकार्यत्वोपलब्धेः । कारणान्तरासम्भवे चादृष्टस्यैव [निमित्त] कारणत्वमिष्यत इति ।

स्थिते हि सद्भावे जीवनपूर्वकस्योत्पत्तिकारणमाह *आत्ममनसोः संयोगात्* असमवायिकारणाद् विशिष्टधर्माधर्मापेक्षादुत्पत्तिरिति । इतरस्तु इच्छाद्वेषपूर्वकः *हिताहितप्राप्तिपरिहारसमर्थस्य व्यापारस्य* कायिकव्यापारस्य हेतुः । तथा *शरीरविधारकश्च* । तेन हि प्रतिबद्धं शरीरे गुरुत्वं न पतनमारभते । तस्योत्पत्तिकारणमाह *आत्ममनसोः संयोगात्* असमवायिकारणात् । *इच्छापेक्षाद् द्वेषापेक्षाद् वोत्पद्यते* इति ।

**गुरुत्ववैधर्म्यम्**

**गुरुत्वं जलभूम्योः पतनकर्मकारणम् । अप्रत्यक्षम्, पतनकर्मानुमेयम्, संयोगप्रयत्नसंस्कारविरोधि । अस्य च अबादिपरमाणुरूपादिवन्नित्यानित्यत्वनिष्पत्तयः ।**

गुरुत्वस्य लक्षणपरीक्षार्थं *गुरुत्वं जलभूम्योः* इत्यादि प्रकरणम् । अप्रत्यक्षत्वे सति पतनकर्मकारणत्वाद् गुरुत्वम् इतरस्माद् भिद्यते । वेगोऽपि पतनकर्मकारणमित्यप्रत्यक्षग्रहणम् । जलभूम्योरिति आश्रयनिरूपणम् । इतरपदापेक्षं वा लक्षणम् । जलभूम्योरेव वर्त्तमानत्वे सति पतनकर्मकारणत्वाद् गुरुत्वम् । रसोऽपि जलभूम्योरेव वर्तते, न तु पतनकारणम्, अभ्युपगमे [वा?च] कारणातिशयेन कार्यातिशयस्य अन्यत्रोपलब्धेः पाषाणादे रसातिशयाभावेन पातातिशयाभावः, पिप्पल्यादौ च तत्सद्भावेन सद्भावः स्यात् । स नास्तीति न रसः कारणं पतनोत्पत्तौ । रूपादेश्च कारणत्वे अनलादावपि सद्भावात् पातः स्यात्, न चास्तीत्यतो रूपादिव्यतिरिक्तं कारणमनुमीयत इत्यत आह *पतनकर्मानुमेयम्* इति । आद्यस्य हि पतनकर्मणोऽसमवायिकारणं गुरुत्वम्, द्वितीयादेस्तु संस्कारोऽपीति । स चासौ जलभूम्योरेव वर्त्तते ।

ननु त्वगिन्द्रियस्य व्यापारात् पञ्चपलं दशपलमिति प्रतिभासनाद् गुरुत्वं प्रत्यक्षम् ? न, त्वगिन्द्रियेण सम्बन्धोपपत्तेः पृथिव्यादिगुरुत्वस्यापि प्रत्यक्षताप्रसङ्गात् । अथ आधेयगतमेव गुरुत्वं परिच्छिनत्ति त्वगिन्द्रियम्, न च तत् पृथिव्यादिगुरुत्वेऽस्तीति । नन्वेवमपि मक्षिकादिगुरुत्वं परिच्छिन्द्यात्,

तस्याप्याधेयगतत्वादिति । न च तस्य अविशिष्टत्वादपरिच्छेदः, प्रत्यक्षद्रव्यसमवायस्याविशेषात् । अथ अधोगतिहेतुत्वं वैशिष्टचम् ? तर्हि त्वगिन्द्रियसम्बन्धेन अधोगतिविशेषमुपलभमानस्य पञ्चपलं दशपलमित्यानुमानिक एव प्रत्ययः ।

अथ दशपलैस्तन्तुभिरारब्धे पटे गुरुत्वातिशयस्यानुपलब्धेः, कारण एव गुरुत्वम्, न तु कार्ये । तदसत्, उभयत्रापि पातोपलब्धेः । न च स्वगतगुरुत्वाभावेऽपि आश्रयान्तरगुरुत्वादेव पतनम्, वाय्वादेरपि पातप्रसङ्गात् । तस्मादुभयत्रापि कार्येण सद्भावसिद्धेर्गुरुत्वमस्तीति । अवनतिविशेषानुपलम्भश्च कार्ये मक्षिकादिगुरुत्वसम्पर्केणापि समान इति । तथाहि, तन्तुषु मीयमानेषु मक्षिकादिसम्पर्केऽपि अवनतिविशेषा नोपलभ्यन्ते, न च तद्गुरुत्वस्यासत्त्वमित्यलम् ।

अथ गुरुत्वस्य पातहेतुत्वे किमिति सर्वदा पातो न भवति ? प्रतिबन्धादित्याह * संयोगप्रयत्नसंस्कारविरोधि * इति । वृन्तफलसंयोगेन प्रतिबद्धं न फले पतनमारभते, प्रयत्नप्रतिबन्धाद् आकाशावस्थितेषु शकुनिषु गुरुत्वं न पतनं करोति, [धनुर्निक्षिप्तेषु शरेषु गुरुत्वं न पतनं करोति वेगाख्य]संस्कारप्रतिबन्धात्, एषामपाये फलादिषु पातदर्शनात् ।

* तस्य चाबादिपरमाणुरूपादिवन्नित्यानित्यत्वनिष्पत्तयः * इति । अबादयश्च ते परमाणवश्चेति तथोक्ताः, तत्परमाणुरूपादीनामिवेति । यथा आप्यपरमाणुरूपादीनामनिष्पद्यमानत्वान्नित्यत्वम्, एवमेव गुरुत्वं नित्येष्वनिष्पत्तेर्नित्यम्, अनित्ये तु कारणगुणपूर्वप्रक्रमेण निष्पद्यमानत्वात् तद्रूपवदेवानित्यमित्यतिदेशार्थः ।

**द्रवत्ववैधर्म्यम्**

**द्रवत्वं स्यन्दनकर्मकारणम् । त्रिद्रव्यवृत्ति । तत्तु द्विविधम्, सांसिद्धिकम्, नैमित्तिकञ्च । सांसिद्धिकमपां विशेषगुणः । नैमित्तिकं पृथिवीतेजसोः सामान्यगुणः । सांसिद्धिकस्य गुरुत्ववन्नित्यानित्यत्वनिष्पत्तयः ।**

**सङ्घातदर्शनात् सांसिद्धिकत्वमयुक्तमिति चेत्, न, दिव्यतेजः-**

**संयुक्तानामाप्यानां परमाणूनां परस्परं संयोगो द्रव्यारम्भकः सङ्घाताख्यः, तेन परमाणुद्रवत्वस्य प्रतिबन्धात् कार्ये हिमकरकादौ द्रवत्वानुत्पत्तिः ।**

**नैमित्तिकञ्च पृथिवीतेजसोरग्निसंयोगजम् । कथम् ? सर्पिर्जतु-मधूच्छिष्टादीनां कारणेषु परमाणुष्वग्निसंयोगाद् वेगापेक्षात् कर्मोत्पत्तौ तज्जेभ्यो विभागेभ्यो द्रव्यारम्भकसंयोगविनाशात् कार्यद्रव्यनिवृत्तावग्नि-संयोगाद् औष्ण्यापेक्षात् स्वतन्त्रेषु परमाणुषु द्रवत्वमुत्पद्यते । ततस्तेषु भोगिनामदृष्टापेक्षाद् आत्माणुसंयोगात् कर्मोत्पत्तौ तज्जेभ्यः संयोगेभ्यो द्व्यणुकादिप्रक्रमेण कार्यद्रव्यमुत्पद्यते, तस्मिंश्च रूपाद्युत्पत्तिसमकालं कारणगुणप्रक्रमेण द्रवत्वमुत्पद्यत इति ।**

इति। स्यन्दन-
द्रवत्वस्य लक्षणपरीक्षार्थमाह*द्रवत्वं स्यन्दनकर्मकारणम्*
व्यभिचारः, तदर्थं त्रिद्रव्य-
कर्म वक्ष्यमाणम् । तत्कारणं द्रवत्वमित्युक्ते वेगेन
नियमेनेति पदमूह्यम् ।
वृत्तीति । तथापि त्रिद्रव्यवृत्तित्वं वेगस्यापि सम्भवतीति
अतो द्रव्यत्वम्,
रूपन्तु नियमेन त्रिद्रव्यवृत्ति, न तु स्यन्दनकर्मकारणम् ।
स्यन्दनकर्मकारणत्वादिति ।
इतरस्मा द्भिद्यते, नियमेन त्रिद्रव्यवृत्तित्वे सति
केन रूपेण ? सांसिद्धिकं नैमित्तिक-
तत्तु द्विविधमिति विभागः ।
*सांसिद्धिकमपां विशेषगुणः,
ञ्चेति । तयोः परस्परं वैलक्षण्यनिरूपणार्थमाह
इति परस्परभेदः । *सांसिद्धि-
नैमित्तिकं पृथिवीतेजसोः सामान्यगुणः*
इति । यथा गुरुत्वं नित्येष्वनिष्पद्य-
कस्य गुरुत्ववन्नित्यानित्यत्वनिष्पत्तयः*
कारणगुणपूर्वकमाश्रयविनाशाच्च
मानत्वान्नित्यम् अनित्येषु निष्पत्तेरनित्यं
एवं सांसिद्धिकद्रवत्वमपीत्यतिदेशार्थः ।
विनश्यति,
हिमकरकादावनुप-
ननु चायुक्तमेतद् अपां सांसिद्धिकद्रव्यत्वमिति,
चेत्, * नैतदेवम्।
सांसिद्धिकत्वमयुक्तमिति
लम्भात् ? *तदाह सङ्घातदर्शनात्
तत्सद्भावसिद्धौ
सांसिद्धिकद्रवत्वस्योपलब्धेः, आप्यपरमाणुषु
अन्यत्र सलिले
निश्चीयते । तच्च अन्यस्यानु-
हिमकरकादौ तस्यानुत्पादात् प्रतिबन्धकमस्तीति
दिव्यतेजःसंयुक्तानामाप्यानां परमाणूनां
पलम्भाद् दिव्यतेजःसंयोग एवेत्याह*
*सङ्घाताख्यः, तेन परमाणुद्रवत्वस्य
परस्परं संयोगो द्रव्यारम्भकः* । स च
इति । तेजःसद्भावस्तु
प्रतिबन्धात् कार्ये हिमकरकादौ द्रवत्वानुत्पत्तिः*

स्फोटादिकार्यानुमेयः । तथा च हिमकरकासम्बन्धादुपलभ्यते स्फोटादिलक्षणं कार्यं शरीरे वृक्षादौ च दाह इति । विलयनञ्चास्य दिव्यतेजःसम्बन्धात् । अवयवे क्रिया, ततो विभागस्तस्मात् संयोगनिवृत्तौ द्रव्यविनाशे सति परमाणवः कार्यमारभन्ते । तत्र च दिव्यतेजःसंयोगस्य प्रतिबन्धकस्य निवृत्तेः परमाणुद्रवत्वं कार्ये द्रवत्वमारभते ।

न चेदं नैमित्तिकम्, सर्पिरादाविव पुनः संग्रहानुपलब्धेः । यथाहि नैमित्तिकद्रवत्वं सर्पिरादाविति द्रुतस्य संग्रहः, तथेहाऽपि स्यात् । न चैतदस्तीति ।

* नैमित्तिकञ्च पृथिवीतेजसोरग्निसंयोगजम् * । कथमित्यव्युत्पन्नप्रश्नः । तत्राह सर्पिरादीनां कारणेष्वित्यादिपदेन सूत्रोक्तानां संग्रहः । तथाहि सर्पिर्जतुमधूच्छिष्टानां पार्थिवानामग्निसंयोगाद् द्रवत्वमद्भिः सामान्यम् । त्रपुसीसलोहरजतसुवर्णानां तैजसानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यमिति (वै० सू० २।१।५४-५५) । अतः सर्पिरादिकारणेषु च परमाणुष्वग्निसंयोगापेक्षाद् वेगापेक्षात् कर्मोत्पत्तौ सत्यन्ततो विभागा जायन्ते । तेभ्यो विभागेभ्यो द्रव्यारम्भकसंयोगविनाशः, ततः कार्यद्रव्यनिवृत्तिस्तस्याञ्च सत्यामग्निसंयोगाद् औष्ण्यापेक्षात् स्वतन्त्रेषु परमाणुषु द्रवत्वमुत्पद्यते । परमाणवः समवायिकारणम्, अग्निसंयोगोऽसमवायिकारणमुष्णस्पर्शो निमित्तकारणमिति । ततोऽनन्तरमुत्पन्नद्रवत्वेषु * भोगिनामदृष्टापेक्षादात्माणुसंयोगात् * कर्मोत्पद्यत इति । परमाणुः समवायिकारणम्, आत्माणुसंयोगोऽसमवायिकारणम्, भोगिनामदृष्टो निमित्तकारणमिति । ततो विभागेभ्यः प्राक्तनसंयोगविनाशे सति तेभ्यः कर्मभ्यः परमाण्वन्तरेण संयोगा जायन्ते । तेभ्यः संयोगेभ्यो द्व्यणुकाण्युत्पद्यन्ते । तदादिक्रमेण त्र्यणुकादिकार्यमुत्पद्यते । तस्मिंश्च द्व्यणुकादौ * रूपाद्युत्पत्तिसमकालं कारणगुणपूर्वक्रमेण द्रवत्वमुत्पद्यत इति * पाकजोत्पत्तिन्यायोऽत्र द्रष्टव्यः । एतावांस्तु विशेषः, तत्रावश्यं रूपादिनिवृत्तिर्न चैवं द्रवत्वस्येति ।

**स्नेहवैधर्म्यम्**

**स्नेहोऽपां विशेषगुणः । संग्रहमृजादिहेतुः । अस्यापि गुरुत्ववन्नित्यानित्यत्वनिष्पत्तयः ।**

स्नेहस्य लक्षणपरीक्षार्थं * स्नेहोऽपां विशेषगुणः सङ्ग्रहमृजादिहेतुः * इति । अपां विशेषगुणो रूपादिरपीति सङ्ग्रहमृजादिहेतुरिति पदम् । सङ्ग्रहः पिण्डीकरणम् । मृजा तु विशदत्वम् । तद्धेतुत्वादितरस्माद् भिद्यते ।

ननु स्नेहस्याभिनवपल्लवादावुपलम्भाद् उदकविशेषगुणत्वमसिद्धम् ? न, संयुक्तसमवायेनोपलम्भात् । संयुक्तं हि पल्लवादिना उदकं तत्समवेतः स्नेहो गृह्यते, तदपाये तस्यानुपलब्धेः, तथा स्नानोत्तरकालं केशादौ स्निग्धप्रत्ययदर्शनात् । यथा च संयोग्याश्रयवैगुण्याभावे सर्वस्मिन्नुदके स्निग्धज्ञानं नैवं सर्वस्यां पृथिव्यामिति । अस्यापि गुरुत्ववन्नित्यानित्यत्वनिष्पत्तय इति । नित्येषु नित्योऽनित्येषु कारणगुणपूर्वः, आश्रयविनाशाद् विनश्यतीति ।

**संस्कारवैधर्म्यम्**

**संस्कारस्त्रिविधो वेगो भावना स्थितिस्थापकश्च । तत्र वेगो मूर्तिमत्सु पञ्चसु द्रव्येषु निमित्तविशेषापेक्षात् कर्मणो जायते, नियतदिक्क्रियाप्रबन्धहेतुः स्पर्शवद्द्रव्यसंयोगविशेषविरोधी क्वचित् कारणगुणपूर्वक्रमेणोत्पद्यते ।**

संस्कारनिरूपणार्थमाह * संस्कारस्त्रिविधः * । केन रूपेण ? वेगो भावना स्थितिस्थापकत्वेनेति । विभाग एवासाधारणत्वाल्लक्षणमिति, तल्लक्षणवैचित्र्यज्ञापनार्थमेतत् । तत्र वेगस्य समानजातीयात् भेदमाश्रयञ्च निरूपयन्नाह * मूर्तिमत्सु * इत्यादि । मूर्तिमत्सु द्रव्येषु । न ज्ञायते कियत्सु, तदर्थं * पञ्चसु * । तथापि न ज्ञायते केषु, तदर्थं * मूर्तिमत्सु * इत्याश्रयनिरूपणम् । यद् वा संस्कारत्वे सति पञ्चसु मूर्तिमत्स्वेव वर्तमानत्वाद् वेग इति लक्षणम् ।

कारणमाह * निमित्तविशेषापेक्षात् कर्मणो जायते * इति । संयोगविभागयोः कर्मजत्वमिति निमित्तविशेषापेक्षादिति विशेषणम् । निमित्तविशेषो नोदनाभिघातसंयुक्तसंयोगाः, तदपेक्षादिति । कर्म असमवायिकारणम्, स्वकारणविशेषो नोदनादिर्निमित्तकारणम्, वेगाधारस्तु समवायिकारणमित्यसाधारणत्वाल्लक्षणं चेदम् । कार्यमाह नियतायां दिशि क्रियाप्रबन्धस्य क्रियासन्तानस्य हेतुरिति ।

ननु चायुक्तमेतत्, अनियतदिग्देशस्य भ्रमणाख्यस्यापि कर्मणः कारण-

त्वात्, सत्यमेतत्, तथाप्यदोषः, नियतदिक्क्रियाप्रबन्धस्यैव हेतुरित्यवधारणानभ्युपगमात् । सोऽपि नियतायामेव दिशि क्रियाप्रबन्ध इति चान्ये । अनियतदिक्क्रियाप्रबन्धहेतुरित्यवधारणस्यात्र पूर्वरूपतां मन्यमाना व्याख्यान्तरं कुर्वते । तस्य विनाशकारणमाह * स्पर्शवद्द्रव्यसंयोगविशेषविरोधी * इति । स्पर्शवद्द्रव्यसंयोगमात्रविरोधित्वे वायुसंयोगेन विरोधादिषोर्गमनं न स्यात्, तद्धेतोर्वेगस्य विनाशादिति विशेषग्रहणम्, कठिनावयवसंयोगेनादावपि तद्विनाशोपलब्धेः ।

नन्वेवमप्याकाशे प्रक्षिप्तस्येषोर्निबिडावयवसंयोगस्य वेगविनाशकस्याभावादपातः स्यात्, न, अनेककार्यकरणे स्पर्शवद्द्रव्यसंयोगमात्रेणापि विनाशस्यान्वयव्यतिरेकाभ्यामुपलम्भात् । तथा च क्षिप्तस्येषोर्वेगविनाशोपलब्धेरवश्यं कारणमभिधेयम्, निर्हेतुकविनाशप्रतिषेधात् । अतो वायुसंयोगेनाप्यनेककार्यकरणे सति विरुध्यते, अदृष्टप्रक्षयाद् वेति । * क्वचित् कारणगुणपूर्वप्रक्रमेणोत्पद्यते * यथा पर्वतस्रोतसामधःपततां संयोगे सत्येकस्मिन्नुदके समुत्पन्ने रूपादिवत् कारणवेगाद् वेगोऽपीति ।

**भावनासञ्ज्ञकस्त्वात्मगुणो दृष्टश्रुतानुभूतेष्वर्थेषु स्मृतिप्रत्यभिज्ञानहेतुर्भवति, ज्ञानमददुःखादिविरोधी । पट्वभ्यासादरप्रत्ययजः पटुप्रत्ययापेक्षादात्ममनसोः संयोगाद् आश्चर्येऽर्थे पटुः संस्कारातिशयो जायते । यथा दाक्षिणात्यस्योष्ट्रदर्शनादिति । विद्याशिल्पव्यायामादिष्वभ्यस्यमानेषु तस्मिन्नेवार्थे पूर्वपूर्वसंस्कारमपेक्षमाणादुत्तरोत्तरस्मात् प्रत्ययादात्ममनसोः संयोगात् संस्कारातिशयो जायते । प्रयत्नेन मनश्चक्षुषि स्थापयित्वा अपूर्वमर्थं दिदृक्षमाणस्य विद्युत्सम्पातदर्शनवदादरप्रत्ययः, तमपेक्षमाणादात्ममनसोः संयोगात् संस्कारातिशयो जायते । यथा देवह्लदे सौवर्णराजतपद्मदर्शनादिति ।**

भावनासंज्ञकस्त्वात्मगुणत्वादितरस्माद् भिद्यते । न च बुद्ध्यादिभिर्व्यभिचारः, संस्कारस्य सतोऽवान्तरविशेषनिरूपणात् । * स्मृतिप्रत्यभिज्ञानहेतुः * इति कार्यनिरूपणम्, सद्भावे प्रमाणञ्चेति । 'स्मृतिर्वासनाख्यात्' भवति,

तथोक्तमात्माधिकारे । केषु स्मृतिप्रत्यभिज्ञानहेतुरित्याह * दृष्टश्रुतानुभूतेषु * इति, निर्णीतार्थेष्विति भावः ।

नाशकारणमाह * ज्ञानमदद:खादिविरोधी * इति । ज्ञानं प्रतिपक्षज्ञानं विवक्षितम्, तेन विरुध्यते, यथा आत्मादिज्ञानजनितः संस्कारो नैरात्म्या-द्यभ्यासेनेति, तस्मिन् सति तत्रास्मरणात् । स्वमदेन विरोधः, बालावस्था-नुभवजनितसंस्कारस्य पुनर्युवावस्थायां विषयाभिभूतस्य तत्रास्मरणात् । दुःखेन, यथा शास्त्रानुभवजनितसंस्कारस्य तीव्रेण दारादिदुःखेनेति, तेन सता तत्रास्मरणात् । आदिपदेन तु क्रोधादेरपि संस्कारनिवर्त्तकत्वमुक्तम् ।

तस्योत्पत्तिकारणमाह पट्वभ्यासादरप्रत्ययेभ्यो जातस्तत्प्रत्ययज इति । पटुप्रत्ययापेक्षादात्ममनसोः संयोगादसमवायिकारणादात्मन्याश्चर्येऽर्थे पटुः संस्कारो जायते, *यथा दाक्षिणात्यस्योष्ट्रदर्शनात् * । स चातिशयेन स्मृतिहेतुर्भवतीति । (अभ्यासाद्) * विद्याशिल्पव्यायामादिष्वभ्य-स्यमानेषु तस्मिन्नेवार्थे पूर्वपूर्वसंस्कारमपेक्षमाणादुत्तरोत्तरस्मात् प्रत्यया-दात्ममनसोः संयोगात् संस्कारातिशयो जायते * । पूर्वपूर्वसंस्कारापेक्षो हि उत्तरोत्तरप्रत्ययोऽभ्यासः, तमपेक्षमाणादात्ममनसोः संयोगादसमवायिकारणा-दात्मनि संस्कारातिशयो जायते * । तत्र विद्यायाम् उपाध्यायोच्चरितपदश्रवणे सति संस्कारः । पुनर्विवक्षादिक्रमेण स्वयमुच्चारणे सति तु ज्ञानं पूर्व-संस्कारापेक्षं संस्कारान्तरमारभते । पुनस्तदुच्चारणे सति तज्ज्ञानं पूर्वसंस्का-रापेक्षं संस्कारान्तरमारभत इत्येवं त्रिचतुरादिपरिवर्त्तने सत्यन्त्यपदानुभवात् पूर्वसंस्कारापेक्षात् संस्कारातिशयो जायते । एतच्चावश्यमभ्युपेयम्, अन्यथा-भ्यासवैयर्थ्यं स्यात् । न चातिप्रसङ्गः, अदृष्टस्य व्यवस्थाहेतुत्वात् । न च तस्यास्ति सर्वत्र सद्भावः, कार्यस्य स्मरणस्य सर्वत्रानुपलब्धेः । यत्र हि स्मरणमस्ति तत्रैव पूर्वसंस्कारापेक्षं ज्ञानं संस्कारमारभत इति । आन्तरे चाभ्यासे पूर्वपूर्वसंस्कारापेक्षं नियतार्थस्मरणमेव संस्कारमारभत इति चिन्त्यम् । एवं शिल्पेऽप्युपाध्यायलिखितचित्रदर्शनात् संस्कारः, पुनः स्वयं सम्पाद्योपलभते; तदनुभवः पूर्वसंस्कारापेक्षः संस्कारान्तरमारभते, पुनः स्वयं लिखित्वोपलभते, तदनुभवः पूर्वसंस्कारापेक्षः संस्कारान्तरमारभते, इत्येवं

द्वित्र्यादिपरिवर्त्तनेन संस्कारातिशयः । व्यायामेऽपि उपाध्यायेन धनुर्वेदपरिपठितन्यायेन प्रयुक्तेषूपलम्भादुपजाते संस्कारे पुनस्तदनुसारितया स्वयं प्रयुक्ते तदनुभवेन पूर्वसंस्कारापेक्षेण संस्कारान्तरमारभ्यते, पुनस्तथैव प्रयोगे सति तदनुभवेन पूर्वसंस्कारापेक्षेणान्यः संस्कार इत्येवमन्त्यानुभवात् संस्कारातिशय इति ।

आदरप्रत्ययजसंस्कारमाह * प्रयत्नेन मनः चक्षुषि स्थापयित्वा अपूर्वमर्थं दिदृक्षमाणस्य * इति, द्रष्टुमिच्छतो विद्युत्सम्पातदर्शनेन तुल्यं वर्त्तते, इति तद्दर्शनवदादरप्रत्ययः । तमपेक्षमाणादात्ममनसोः संयोगादसमवायिकारणादात्मनि संस्कारातिशयो जायते । * यथा देवह्रदे सौवर्णराजतपद्मदर्शना *-दिति * । तत्र हि सौवर्णराजतपद्मयोरुत्थानमागमाल्लोकप्रवादतो वा समुपलभ्य पुनर्विशिष्टयात्रासमये प्रयत्नेन संस्कारातिशयो भवतीति ।

**स्थितिस्थापकस्तु स्पर्शवद्द्रव्येषु वर्त्तमानो घनावयवसन्निवेशविशिष्टेषु कालान्तरावस्थायिषु स्वाश्रयमन्यथाकृतं यथावत् स्थापयति । स्थावरजङ्गमविकारेषु धनुःशाखादन्तशृङ्गास्थिसूत्रवस्त्रादिषु भुग्नसंवर्तितेषु स्थितिस्थापकस्य कार्यं संलक्ष्यते । नित्यानित्यत्वनिष्पत्तयोऽस्यापि गुरुत्ववत् द्रष्टव्या ।**

स्थितिस्थापकस्तु संस्कारत्वे सति स्पर्शवत्स्वेव द्रव्येषु वर्त्तमानत्वादितरस्माद भिद्यते । किं भूतेषु ? * घनावयवसन्निवेशविशिष्टेषु * इति । घनाश्च ते अवयवाश्च, तेषां सन्निवेशो रचनाविशेषः । घन इति सन्निवेशस्य वा विशेषणम्, तद्विशिष्टेषु । * कालान्तरावस्थायिषु स्वाश्रयमन्यथाकृतं यथावत् स्थापयति * इत्यतः स्थितिस्थापकः ।

सद्भावे प्रमाणमाह स्थावराश्च जङ्गमाश्चेति तथोक्तास्तेषां विकारेषु धनुःशाखादन्तशृङ्गास्थिषु, सूत्रवस्त्रादिषु च भुग्नेषु संवर्तितेषु पिण्डीकृतेषु तस्य कार्यं संलक्ष्यते । तथाहि धनुषि शाखादौ च आकर्षणकर्मण्युपजाते नोदनादिभ्यस्तन्निवृत्तावपि कर्मोपलम्भादवश्यमसमवायिकारणं वाच्यम्, वस्तुनस्तदन्तरेणानुत्पत्तेः । न च नोदनादेरन्यतमः सम्भाव्यत इत्यन्येनासमवायिकारणेन भवितव्यम्, क्रियाविभागयोश्च क्रियोत्पत्तावकारणत्वोपलम्भात् ।

तथा तन्निवृत्तावपि प्रतिबन्धकाभावे सति शाखादौ पूर्वावस्थावस्थापककर्मोपलम्भान्निमित्तान्तरमेव न्याय्यम् । अदृष्टविशेषस्य तु साधारणत्वात् कारणत्वं न प्रतिषिद्धचत इति ।

* नित्यानित्यत्वनिष्पत्तयोऽप्यस्य गुरुत्ववद् द्रष्टव्या * इति । यथा हि गुरुत्वं नित्येषु नित्यमुत्पत्तिविनाशकारणाभावादनित्येषु कारणपूर्वकमाश्रयविनाशाद् विनश्यति एवं स्थितिस्थापकसंस्कारोऽपीति । कार्ये तु स्थितिस्थापकसंस्कारप्रसिद्धेस्तदारम्भकपरमाणुष्वपि तत्कल्पना क्रियते ।

**धर्मवैधर्म्यम्**

**धर्मः पुरुषगुणः, कर्तुः प्रियहितमोक्षहेतुः, अतीन्द्रियोऽन्त्यसुखसंविज्ञानविरोधी, पुरुषान्तःकरणसंयोगविशुद्धाभिसन्धिजः, वर्णाश्रमिणां प्रतिनियतसाधननिमित्तः । तस्य तु साधनानि श्रुतिस्मृतिविहितानि वर्णाश्रमिणां सामान्यविशेषभावेनावस्थितानि द्रव्यगुणकर्माणि ।**

धर्मस्य लक्षणपरीक्षार्थमाह * धर्मः पुरुषगुणः * इत्यादि । पुरुषगुणत्वं बुद्धचादावपीत्यतः * प्रियहितमोक्षहेतुः * इति । प्रियं सुखम्, हितं तत्साधनम् । नवानामात्मविशेषगुणानामत्यन्तोच्छित्तिर्मोक्ष इति । अथेश्वरज्ञानमप्येषां हेतुरतः कर्त्तुरिति । येन हि कृतो धर्मस्तत्रैव प्रियहितमोक्षहेतुः, न चैवमीश्वरज्ञानस्य, अकार्यतया कर्त्तुरभावादिति । अथ तत्त्वज्ञानं कर्त्तुर्यथोक्तफलहेतुस्तदर्थमतीन्द्रिय इति । संस्कारोऽपि स्मृतिद्वारेणैव भवतीत्यतोऽन्त्यसुखसंविज्ञानविरोधीति । अन्त्यमावसानिकं सुखं तत्संवेदनेन विरुध्यते ।

नन्वेवमपि अतीन्द्रियत्वे सत्यन्त्यसुखसंविज्ञानविरोधित्वात्, धर्मः इतरस्माद् भिद्यत इत्युक्ते व्यभिचाराभावाद् व्यर्थं शेषाभिधानम्, न, अन्यत्वात् कर्त्तुः । प्रियहितमोक्षहेतुरिति विशिष्टार्थक्रियानिरूपणम् । पुरुषगुण इत्यन्यथाभावप्रतिषेधार्थम् ।

अथ पुरुषगुणत्वे किं प्रमाणम् ? अनुमानमागमश्च । तथाहि तनुभुवनादिकार्यम्, पुरुषगुणपूर्वकम्, विचित्रकार्यत्वाद्, रथादिवदिति । यथाहि

रथादिकर्त्ता भोक्तुरभिप्रायं विचित्रमपेक्षमाणस्तथैव तद्रचनां करोति एवं शरीरादिकर्त्तापीति । न च शरीरोत्पत्तेः पूर्वमस्मदाद्यात्मनि बुद्ध्यादयः सन्ति, संस्कारस्तु स्मरणोत्पत्तावेवावगतसामर्थ्य इति गुणान्तरं तद्गतमपेक्षमाणस्तदुपभोगनिष्पत्तये विचित्रं शरीरादिकमारभत इति । आगमस्तु 'यावदात्मनि धर्माधर्मौ तावदायुः शरीरमिन्द्रियाणि विषयाश्चे'ति, तथा 'क्षीयन्ते चास्य कर्माणी'ति ।

येषान्तु बुद्धिगुणो धर्मस्तेषां कथं नाकर्मनिमित्तः स्वर्गः ? तथाहि प्रलयावस्थायां बुद्धेः प्रधाने प्रलीनतया धर्माधर्मयोरनभिव्यक्तौ प्रधानस्य बुद्ध्यादिभावेन परिणामो न स्यात्, अभिव्यक्तस्य कर्मणः कारणत्वाभ्युपगमात् । न चादावनभिव्यक्तमेव कारणम्, बुद्धिस्थञ्चाभिव्यक्तमिति वाच्यम्, विशेषहेत्वभावात् । बुद्ध्यादिसम्पादितं कर्म कर्त्तुर्भोगसम्पादकमित्यभ्युपगमे च अविशेषेण सकलपुरुषोपभोगसम्पादकं स्यात्, नियमहेत्वभावात् । तथा मुक्तात्मनोऽपि शरीरादिसम्पादनाय प्रवर्त्तेत, अविशेषादिति संसारित्वप्रसङ्गः । गुणपुरुषान्तरविवेकादर्शनञ्च प्रधानप्रवृत्तेर्न कारणम्, पूर्वमेव प्रतिषेधात् ।

येऽपि परमाणुरूपो धर्म इति मन्यन्ते, तेषामपि तस्य नित्यतायां सकलक्रियाविलोपप्रसङ्गः, मरणाद्यभावश्च । अनित्यता तु परमाणुरूपतायां न सम्भवत्येव, तस्य परमाणुत्वेनोत्पत्तिविनाशकारणाभावात् । तथा परमाणूनां धर्मशब्देनाभिधाने संज्ञाभेदमात्रमेव स्यात् । अथ परमाणुगुणौ धर्माधर्मौ ? एवमपि सर्वपुरुषाणाम् एकाकारो भोगः स्यात्, पुण्यापुण्याधिकरणैः परमाणुभिरारम्भाविशेषात् ।

अथ केचित् पुण्याधिकरणाः परमाणवोऽन्ये चापुण्याधिकरणाः । तत्राधिकैः पुण्याधिकरणैरारब्धे सुखातिशयोऽधिकैश्चापुण्याधिकरणैर्दुःखमिति चेत्, अत्रापि तयोर्नित्यत्वे मरणाद्यभावप्रसङ्गः । अनित्यत्वन्तु न युक्तम् । परमाणुविशेषगुणानामस्मदादिव्यापारेणोपपत्तेरदर्शनात् ।

अन्ये त्वनाश्रितो धर्म इति मन्यन्ते, तत्रापि अनित्यपक्षे न किञ्चिद् अनाश्रितं वस्तुभूतं कार्यं सम्भवतीति दूषणम् । नित्यपक्षे तु यागादिक्रियाविलोपप्रसङ्गः । अथ क्रियाभिव्यक्तः कार्यकारणः ? तर्हि क्षणिकत्वेन क्रिया-

विनाशे स्वर्गादिफलं न स्यात् । न च प्रदीपस्येवाभिव्यञ्जकत्वं तत्प्रकाशकत्वं क्रियायाः, तद्भावेऽपि तस्यानुपलम्भात् । अथ यागादिक्रिया धर्मस्य सामर्थ्यमुपजनयतीति चेत् ? तर्हि यत् तत् सामर्थ्यं स एव धर्मः, यत्राश्रितः स चात्मेति संज्ञाभेदमात्रं स्यात् । तथा अमूर्त्तस्यात्मना सम्बन्धाभावात् तत्सम्बन्धित्वेन फलाभाव इत्यलं प्रसङ्गेन । न च बोधात्मकमेव कर्म, व्यतिरेकानभ्युपगमे बोधरूपतया सर्वत्राविशेषेण जगद्वैचित्र्याप्रसङ्गात् ।

तस्योत्पत्तिकारणमाह पुरुषान्तःकरणसंयोगादसमवायिकारणादुपजायते । * शुद्धाभिसन्धिज * इति अभिसन्धेर्निमित्तकारणत्वं दर्शयति । वर्णाश्रमिणां प्रतिनियतानि साधनानि निमित्तं यस्यासौ तन्निमित्तः ।

तदेवाह * तस्य तु साधनानि श्रुतिस्मृतिविहितानि * । वर्णाश्च ब्राह्मणादयः, आश्रमाश्च ब्रह्मचर्यादयस्तेषाम्, सामान्यविशेषभावेनावस्थितानि द्रव्यगुणकर्माणीति ।

**तत्र सामान्यानि धर्मे श्रद्धा, अहिंसा, भूतहितत्वम्, सत्यवचनम्, अस्तेयम्, अनुपधा, ब्रह्मचर्यम्, क्रोधवर्जनम्, अभिषेचनम्, शुचिद्रव्यसेवनम्, विशिष्टदेवताभक्तिः, उपवासोऽप्रमादश्च ।**

* तत्र सामान्यानि * साधनानि । * धर्मे श्रद्धा * भक्तिविशेषः कारणम् । अहिंसा तु यत्यादेः सर्वदा, अन्यस्य देशविशेषे कालविशेषे चेति । यथा तीर्थे न हनिष्यामि, अमावास्यादौ । भूतहित्वमपि कस्यचित् सर्वदा, कस्यचिद् देशविशेषादाविति । सत्यवचनं धर्मसाधनम् यन्न परेषामनिष्टम् । उक्तञ्च 'न ब्रूयात् सत्यमप्रियमि'ति । अस्तेयमचौर्यम् । कस्याञ्चिदवस्थायां चौर्येऽपि न दूषणमित्युक्तम् । यथा मुमूर्षोर्द्विजस्याशनमात्राहरणमिति । अनुपधा परान्द्रोहः । ब्रह्मचर्यम् अपत्यसृजः करणस्योपस्थस्य संयमः, तच्च कस्यचित् सर्वदा, कस्यचिद् देशकालविशेष इति । क्रोधवर्जनमप्येवम् । अभिषेचनं स्नानम् । शुचिद्रव्याणां सेवनमासनपरिधानाशनैः । विशिष्टदेवताभक्तिरिति त्रयीप्रसिद्धानुमानावगतदेवताविशेषभक्तिः । उपवासोऽहोरात्रं नैरशनता, कालविशेषादौ धर्मसाधनम् । अप्रमादो विहितानुष्ठाने निरालस्यम् ।

**ब्राह्मणक्षत्रियवैश्यानामिज्याध्ययनदानानि । ब्राह्मणस्य विशिष्टानि प्रतिग्रहाध्यापनयाजनानि, स्ववर्णविहिताश्च संस्काराः । क्षत्रियस्य सम्यक्प्रजापालनमसाधुनिग्रहो युद्धेष्वनिवर्तनम्, स्वकीयाश्च संस्काराः । वैश्यस्य क्रयविक्रयकृषिपशुपालनानि स्वकीयाश्च संस्काराः । शूद्रस्य पूर्ववर्णपारतन्त्र्यम्, अमन्त्रिकाश्च क्रियाः ।**

ब्राह्मणक्षत्रियविशां सामान्यानि धर्मसाधनानि, इज्या यजनम्, अध्ययनं वेदपाठः, दानं सत्पात्रस्य द्रव्यनिवेदनमिति । ब्राह्मणस्यासाधारणानि धर्मसाधनानि * प्रतिग्रहाध्यापनयाजनानि* । प्रतिग्रहः शास्त्रेणानिन्दितद्रव्यादानम्, वेदपाठो, याजनं यागे पौरोहित्यम्, स्ववर्णनियताश्च संस्काराः । क्षत्रियस्यासाधारणानि धर्मसाधनानि * सम्यक् प्रजापालनम्, असाधुनिग्रहो युद्धेष्वनिवर्तनम्, स्वकीयाश्च संस्काराः । वैश्यस्य क्रयविक्रयकृषिपशुपालनानि, स्वकीयाश्च संस्काराः । शूद्रस्य सर्वदा ब्राह्मणाद्याज्ञया वर्तनम्, अमन्त्रकाश्चोङ्कारादिविवर्जिताः क्रिया इति * ।

**आश्रमिणान्तु, ब्रह्मचारिणः गुरुकुलनिवासिनः स्वशास्त्रविहितानि गुरुशुश्रूषाग्नीन्धनभैक्ष्याचरणानि मधुमांसदिवास्वप्नाञ्जनाभ्यञ्जनादिवर्जनञ्च । विद्याव्रतस्नातकस्य कृतदारस्य गृहस्थस्य शालीनयायावरवृत्त्युपार्जितैरर्थैर्भूतमनुष्यदेवपितृब्रह्माख्यानां पञ्चानां महायज्ञानां सायम्प्रातरनुष्ठानम्, एकाग्निविधानेन पाकयज्ञसंस्थानाञ्च नित्यानां शक्तौ विद्यमानायाम् । अग्न्याधेयादीनाञ्च हविर्यज्ञसंस्थानाम् अग्निष्टोमादीनाम्, सोमयज्ञसंस्थानाञ्च । ऋतवन्तरेषु ब्रह्मचर्यमपत्योत्पादनञ्च । ब्रह्मचारिणो गृहस्थस्य वा ग्रामान्निर्गतस्य वनवासो वल्कलाजिनकेशश्मश्रुनखरोमधारणञ्च । वन्याम्बुहुतातिथिशेषभोजनानि वनस्थस्य । त्रयाणामन्यतमस्य श्रद्धावतः सर्वभूतेभ्यो नित्यमभयं दत्त्वा संन्यस्य स्वानि कर्माणि यमनियमेष्वप्रमत्तस्य षट्पदार्थप्रसंख्यानाद् योगप्रसाधनं प्रव्रजितस्येति । दृष्टञ्च प्रयोजनमनुद्दिश्यैतानि साधनानि भावप्रसादञ्चापेक्ष्य आत्ममनसोः संयोगाद्धर्मोत्पत्तिरिति ।**

*आश्रमिणान्तु *धर्मसाधनान्युच्यन्ते । तत्र ब्रह्मचारिणः, किंविशिष्टस्य ? गुरुकुले वसतस्तच्छीलं चेति तद्वासिनो * गुरुशुश्रूषाग्नीन्धनभैक्ष्याचरणानि* ।

विभागजनकत्वम्, अतः परस्परमिति पदम् । तथापि परस्परं संयोगिनो विभागजनकस्य कर्मणः कारणं संयुक्तसंयोगोऽपीत्यतो गुरुत्वद्रवत्वप्रयत्न-वेगान् समस्तव्यस्तानपेक्षमाण इति । तत्र यदा चुलुकेनोदकं गृहीत्वा वेगेन प्रतिक्षिपति, तदा सर्वे गुरुत्वादयः सम्भवन्तीति तदपेक्षं चुलुकोदकसंयोगो नोदनम् । व्यस्तपक्षे तु गुरुत्वमपेक्षणमाणः संयोगो नोदनम्, यथा सूक्ष्मशा-शाखोपरि व्यवस्थापितमतिशयेन गुरुद्रव्यमधोगतिहेतुर्भवति शाखायाः । द्रव-त्वमपेक्षमाणस्तृणोदकसंयोगस्तृणे गमनमारभते । वेगमपेक्षमाणो वायु-वनस्पतिसंयोगो वृक्षादिषु चलनकारणम् । प्रयत्नापेक्षस्तु हस्तमुसलसंयोगो मुसलकर्मोत्पत्तौ । यदा च प्रयत्नेन पङ्के पादमुपक्षिपति, तदा प्रयत्नगुरुत्वे चापेक्ष्य पादपङ्कसंयोगः पङ्कमधो नयतीति । यदा च पाषाणादेर्वेगेन पाते सति पङ्केन संयोगस्तदा पाषाणादिगतं गुरुत्वं वेगञ्च अपेक्षमाणं पाषाण-पङ्कसंयोगो नोदनमिति । यदा कश्चिद् वेगेन कूपादौ पतति, तदा गुरुत्व-प्रयत्नवेगान् अपेक्ष्य देवदत्तोदकसंयोगोऽधोगतिहेतुर्भवति । यदा च जलधर-धारासम्बन्धात् तृणादेरधोगमनम्, तदा गुरुत्वद्रवत्ववेगानपेक्षत इत्यादि द्रष्टव्यम् । तस्माद् यथोक्तान्नोदनाच्चतुर्ष्वपि महाभूतेषु कर्म भवतीत्युदाहरण-माह यथा पङ्काख्यायां पृथिव्यां पादादिसंयोगाद् यथोक्तविशेषणादिति ।

**वेगापेक्षो यः संयोगविशेषो विभागहेतोरेकस्य कर्मणः कारणम्, सोऽभिघातः । तस्मादपि चतुर्षु महाभूतेषु कर्म भवति । यथा पाषाणादिषु निष्ठुरे वस्तुन्यभिपतितेषु । तथा पादादिभिर्नुद्यमानायाम् अभिहन्यमानायां वा पङ्काख्यायां पृथिव्यां यः संयोगो नोदनाभिघा-तयोरन्यतरापेक्षः, उभयापेक्षो वा, स संयुक्तसंयोगः, तस्मादपि पृथिव्या-दिषु कर्म भवति । ये च प्रदेशा न नुद्यन्ते नाप्यभिहन्यन्ते तेष्वपि कर्म जायते ।**

अभिघातस्येतरस्माद् भेदार्थमाह वेगापेक्षो यः संयोगविशेषः परस्परं विभागहेतोरेकस्य कर्मणः कारणम्, सोऽभिघात इति । विभागहेतुकर्मकारणं नोदनादिरपीति परस्परं विभागहेतोरिति पदम् । तथापि आत्ममनःसंयोगेन

व्यभिचारपरिहारार्थं वेगापेक्ष इतिपदम् । न चात्ममनःसंयोगः परस्परविभागहेतुसम्पादको वेगापेक्ष इति ।

नन्वेकस्येति पदं व्यर्थम्, अभिघातादुभयत्रापि कर्मोपलब्धेः । सत्यम् । तथाप्येकस्येति आद्यकर्मज्ञापनार्थम् उत्तरोत्तराणि वेगादेव भवन्तीति । नोदनादिश्चोत्तरकर्मणां बहूनामपि कारणमिति । अन्ये तु एकस्य कारणमेव, न त्वेकस्यैवेत्यवधारणं मन्यन्ते । नोदनेऽप्येकस्येति विशेषणमेवं व्याख्येयम् । उदाहरणन्तु यथा पाषाणादिषु पाषाणाद्यभिघातादिति । संयुक्तसंयोगनिरूपणार्थमाह तथा पादादिभिर्नुद्यमानायामित्यादि ।

परस्परमविभागकृतः कर्मणः कारणं नोदनमपीत्यतो नोदनाभिघातयोरन्यतरापेक्ष उभयापेक्षो वा यः संयोगः, स संयुक्तसंयोगः । क्वचिन्नोदनापेक्षः, क्वचिदभिघातापेक्षः, क्वचिदुभयापेक्ष इति । उदाहरणन्तु यथा पङ्काख्यायां पृथिव्याम् । किं विशिष्टायाम् ? पादादिभिर्नुद्यमानायाम् अभिहन्यमानायां पृथिव्यां वा ये प्रदेशा न नुद्यन्ते, न साक्षात्पादेन सम्बद्धयन्ते नाप्यभिहन्यन्ते न साक्षात् पाषाणादिना सम्बद्धयन्ते, तेष्वपि कर्म सञ्जायते । प्रदेशाः समवायिकारणम्, पादादिभिश्च सम्बद्धप्रदेशैः सह संयोगो असमवायिकारणम्, पादादिसंयोगाश्च निमित्तकारणम् ।

**पृथिव्युदकयोर्गुरुत्वविधारकसंयोगप्रयत्नवेगाभावे सति गुरुत्वाद् यदधोगमनम्, तत्पतनम् । यथा मुसलशरीरादिषूक्तम् । तत्राद्यं गुरुत्वात्, द्वितीयादीनि तु गुरुत्वसंस्काराभ्याम् ।**

पतननिरूपणार्थमाह गुरुत्वाद् यदधोगमनम् तत् पतनम् । वायोरप्यधोगमनं वृक्षकोटरादिषूर्ध्वप्रदेशेन प्रविष्टस्य सम्भवतीति तद्व्यवच्छेदार्थं गुरुत्वादिति । पृथिव्युदकयोरित्याश्रयनिरूपणम् । पतनाश्रयः समवायिकारणम्, गुरुत्वमसमवायिकारणम्, गुरुत्वविधारकसंयोगप्रयत्नवेगाभावे सतीति निमित्तकारणं दर्शयतीति । यथा मुसलशरीरादिष्वित्युदाहरणम् । हस्तमुसलसंयोगाभावान् मुसले पतनम्, प्रयत्नाभावाच्छरीरे, वेगाभावादिषाविति । तत्राद्यं गुरुत्वादेवासमवायिकारणादुत्पद्यते पतनम्, तच्चोत्पन्नं

स्वकारणापेक्षं संस्कारमारभते, तस्माद् द्वितीयादीनि तु पतनानि गुरुत्वसंस्काराभ्यामसमवायिकारणाभ्यामुत्पद्यन्ते ।

**स्रोतोभूतानामपां स्थलान्निम्नाभिसर्पणं यत् तद् द्रवत्वाद् स्यन्दनम् । कथम् ? समन्ताद् रोधःसंयोगेनावयविद्रवत्वं प्रतिबद्धम्, अवयवद्रवत्वमप्येकार्थसमवेतं तेनैव प्रतिबद्धम्, उत्तरोत्तरावयवद्रवत्वानि संयुक्तसंयोगैः प्रतिबद्धानि । यदा तु मात्रया सेतुभेदः कृतो भवति तदाः समन्तात् प्रतिबद्धत्वादवयविद्रवत्वस्य कार्यारम्भो नास्ति । सेतुसमीपस्थस्यावयवद्रवत्वस्योत्तरोत्तरेषामवयवद्रवत्वानां प्रतिबन्धकाभावाद् वृत्तिलाभः । ततः क्रमशः संयुक्तानामेवाभिसर्पणम् । ततः पूर्वद्रव्यविनाशे सति प्रबन्धेनावस्थितैरवयवैर्दीर्घं द्रव्यमारभ्यते । तत्र च कारणगुणपूर्वक्रमेण द्रवत्वमुत्पद्यते । तत्र च कारणानां संयुक्तानां प्रबन्धेन गमने यदवयविनि कर्मोत्पद्यते तत् स्यन्दनाख्यमिति ।**

स्यन्दननिरूपणार्थमाह स्रोतोभूतानामपां स्थलान्निम्नाभिसर्पणं यत् तद् द्रवत्वात् स्यन्दनमिति । स्थलान्निम्नाभिसर्पणं पाषाणादेरपीति स्रोतोभूतानामिति पदम् । सर्पादेरप्येवं प्रवाहः सम्भवतीत्यपामिति ग्रहणम् । तथाप्यपां दृढहस्तपरिगृहीतानां स्थलान्निम्नाभिसर्पणं न भवतीत्यतः स्रोतोभूतानामिति । अपामिति च बाहुल्यापेक्षया, न त्वपामेवेत्यवधार्यते, तैलादावपि सद्भावात् । अतो यद् उक्तरूपमभिसर्पणम्, तत् स्यन्दनं द्रवत्वाद् भवतीति ।

कथमित्यव्युत्पन्नस्य विस्तरपरिज्ञानापेक्षया प्रश्नान्तरमाह समन्ताद् रोधःसंयोगेनावयविद्रवत्वं प्रतिबद्धमित्यादि । समन्तात् सर्वतो रोधसा सह संयोगेन सेतुसंयोगेन अवयविद्रवत्वं प्रतिबद्धम् उदके क्रियां न करोति, नाप्यवयवद्रवत्वं स्यन्दनमारभत इत्याह अवयवद्रवत्वमप्येकार्थसमवेतम्, यत्र ह्यवयवद्रवत्वं तत्रैव रोधःसंयोगोऽपीत्यतस्तेनैव प्रतिबद्धम्, उत्तरोत्तरावयवद्रवत्वानि तु संयुक्तसंयोगैः प्रतिवद्धानि । रोधःसंयुक्तावयवेनान्यः संयोगः, तेनाप्यन्य इत्युत्तरोत्तरावयवसंयोगैस्तद्गतद्रवत्वानि प्रतिबद्धानि

क्रियां नारभन्ते । यदा तु सेतुभेदः कृतो भवति तदा समन्तात् प्रतिबद्धत्वाद् अवयविद्रवत्वस्य कर्मारम्भो नास्तीति । अयमस्यार्थः महापरिमाणसम्बन्धित्वादवयविनो न सूक्ष्मरन्ध्रदेशनिष्क्रमणम्, सेतोस्तु समीपस्थस्यावयवद्रवत्वस्य कार्यारम्भकत्वम्, तत्प्रतिबन्धकस्य संयोगस्य व्यावृत्तेः । ततः क्रमेणोत्तरोत्तरावयवद्रवत्वानां वृत्तिलाभः कार्यजनकत्वम् । तथाहि सेतुसमीपस्थस्यावयवस्य चलने सति अवयवान्तरेण विभागात् तत्संयोगो निवर्तते, ततो द्वितीयावयवद्रवत्वं प्रतिबन्धकाभावात् क्रियामारभते, ततस्तृतीयावयवसंयोगनिवृत्तौ तद्गतं द्रवत्वं कर्मारभत इत्येवमुत्तरोत्तराणां वृत्तिलाभः, ततः संयुक्तानामेवाभिसर्पणमिति ।

यद्यपि संयोगस्य प्रतिबन्धकस्य विनाशे सत्यन्यस्य सर्पणम्; तथापि तज्ज्ञापनार्थं क्रमशः संयुक्तानामेवाभिसर्पणमित्युक्तम् । ततो द्रव्यारम्भकसंयोगविनाशे सति पूर्वद्रव्यविनाशः, तस्मिन् सप्रतिबन्धेन सन्तानेनावस्थितैरवयवैर्दीर्घद्रव्यमारभ्यते, तत्र च द्रव्ये कारणगुणपूर्वक्रमेण द्रवत्वमुत्पद्यते । कारणद्रवत्वानि असमवायिकारणमवयविनि द्रवत्वोत्पत्ताविति । तत्र कारणानां प्रबन्धेन परिपाट्या गमनेऽवयविनि यत् कर्मोत्पद्यते, तत् स्यन्दनाख्यमिति ।

**संस्कारात् कर्म इष्वादिषूक्तम् । तथा चक्रादिष्ववयवानां पार्श्वतः प्रतिनियतदिग्देशसंयोगविभागोत्पत्तौ यदवयविनः संस्कारादनियतदिग्देशसंयोगविभागनिमित्तं कर्म तद्भ्रमणमिति । एवमादयो गमनविशेषाः ।**

उपसंहारमाह संस्कारात् कर्मेष्वादिषूक्तम्, गुरुत्वादिभ्यश्च । तथाभ्रमणं संस्कारादेव भवतीत्याह—चक्रादिषु तदवयवानाञ्च पार्श्वतः प्रतिनियतदिग्देशसंयोगविभागोत्पत्ताविति । प्रतिनियता हि दिग्देशाश्चक्रावष्टब्धाः, तैः सह संयोगे विभागे च कर्त्तव्ये यदवयविनि कर्मोत्पद्यते । कुतः ? संस्कारादिति । आद्यदण्डचक्रसंयोगादसमवायिकारणाद् दण्डहस्तसंयोगापेक्षाद् उपजातं चक्रे कर्म स्वकारणविशेषापेक्षं संस्कारमारभते । ततः संस्कारनोदनाभ्यां कर्माणि

पुनः पुनः संस्कारादेव । अवयवेषु चाद्यकर्मोत्पत्तौ नोदनापेक्षः संयुक्तसंयोगोऽसमवायिकारणम्, ततः संस्कारोत्पादे सति संस्कारोऽपीति । अनियतदिग्देशसंयोगविभागनिमित्तं [कर्म] तद्भ्रमणमिति, अनियतैर्दिग्देशैः संयोगविभागान् करोतीति ।

**प्राणाख्ये तु वायौ कर्म आत्मवायुसंयोगाद् इच्छाद्वेषपूर्वकप्रयत्नापेक्षाद् जाग्रत इच्छानुविधानदर्शनात्, सुप्तस्य तु जीवनपूर्वकप्रयत्नापेक्षात् । आकाशकालदिगात्मनां सत्यपि द्रव्यभावे निष्क्रियत्वम्, सामान्यादिमूर्तत्वात् । मूर्तिरसर्वगतद्रव्यपरिमाणम्, तदनुविधायिनी च क्रिया, सा चाकाशादिषु नास्ति, तस्मान्न तेषां क्रियासम्बन्धोऽस्तीति ।**

कार्यभेदेन भेदं दर्शयति प्राणाख्ये तु वायौ कर्म कुतो भवतीत्याह आत्मवायुसंयोगादसमवायिकारणाद् इच्छाद्वेषपूर्वकप्रयत्नापेक्षादुत्पद्यते । किं विशिष्टस्येत्याह जाग्रत इति । कुत एतत् ? इच्छानुविधानदर्शनादिति । रेचनेच्छातो रेचनम्, पूरणेच्छातश्च पूरणमिति । सुप्तस्य तु जीवनपूर्वकप्रयत्नापेक्षादात्मवायुसंयोगादसमवायिकारणात् प्राणाख्ये वायौ कर्मोत्पद्यत इति । किमत्र प्रमाणम् ? सुप्तस्य जीवनपूर्वकात् प्रयत्नाद् वायौ कर्मेत्यनुमानम् । तथाहि सुप्तस्य वायुक्रिया, प्रयत्नकार्या, परिगृहीतवायुक्रियात्वात्, जाग्रदवस्थायां तद्वायुक्रियावत् । यत्र च प्रत्यक्षानुमानाभ्यामन्यत् कारणं नोपलभ्यते, तत्रादृष्टस्यैव कारणत्वम् । अत्र चानुमानात् प्रयत्नकार्यत्वप्रसिद्धाविच्छाद्वेषपूर्वकप्रयत्नाभावात् सुप्तस्य जीवनपूर्वकप्रयत्नकार्यत्वं निश्चीयत इति ।

एवं चतुर्षु महभूतेषु नोदनादिभ्यः कर्मव्याख्यायाम् आकाशादौ क्रियाशून्यत्वे कारणमाह आकाशकालदिगात्मनः, सत्यपि द्रव्यभावे निष्क्रियाः, सामान्यादिवद् अमूर्तत्वात् । यथाहि सामान्यादेरमूर्तत्वान्निष्क्रियत्वं तद्वदाकाशादेरपीति । मूर्तत्वेन हि क्रियावत्त्वं व्याप्तम्, तच्च व्यावर्त्तमानम् आकाशादिभ्यः स्वव्याप्तं क्रियावत्त्वं गृहीत्वा व्यावर्त्तत इति । तदेवाह मूर्तिरसर्वगतद्रव्यपरिमाणम्, तदनुविधायिनी च क्रिया । यत्र यत्र क्रिया, तत्र तत्र

मूर्त्तिरिति। सा च मूर्त्तिराकाशादिषु नास्ति। तस्मान्न तेषां क्रियासम्बन्धोऽस्तीति।

**सविग्रहे मनसोन्द्रियान्तरसम्बन्धार्थम्—जाग्रतः कर्म आत्ममनःसंयोगाद् इच्छाद्वेषपूर्वकप्रयत्नापेक्षात्, अन्वभिप्रायम् इन्द्रियान्तरेण विषयान्तरोपलब्धिदर्शनात्, सुप्तस्य प्रबोधकाले जीवनपूर्वकप्रयत्नापेक्षात्। अपसर्पणकर्मोपसर्पणकर्म चात्मनः संयोगाददृष्टापेक्षात्। कथम् ? यदा जीवनसहकारिणोर्धर्माधर्मयोरुपभोगात् प्रक्षयः, अन्योन्याभिभवो वा, तदा जीवनसहाययोर्वैकल्यात् तत्पूर्वकप्रयत्नवैकल्यात् प्राणनिरोधे सत्यन्याभ्यां वृत्तिलब्धधर्माधर्माभ्यामात्ममनःसंयोगसहायाभ्यां मृतशरीराद् विभागकारणमसर्पणकर्मोत्पद्यते। ततः शरीराद् बहिरपगतं ताभ्यामेव धर्माधर्माभ्यां समुत्पन्नेन आतिवाहिकशरीरेण सम्बध्यते, तत्सङ्क्रान्तश्च स्वर्गं नरकं वा गत्वा आशयानुरूपेण शरीरेण सम्बद्ध्यते, तत्संयोगार्थं कर्मोपसर्पणमिति। योगिनाञ्च बहिरुद्रेचितस्य मनसोऽभिप्रेतदेशगमनं प्रत्यागमनञ्च। तथा सर्गकाले प्रत्यग्रेण शरीरेण सम्बन्धार्थं कर्म अदृष्टकारितम्। एवमन्यदपि महाभूतेषु यत्प्रत्यक्षानुमानाभ्यामनुपलभ्यमानकारणमुपकारापकारसमर्थश्च भवति तदप्यदृष्टकारितम्। यथा सर्गादावणुकर्म, अग्निवाय्वोरूर्ध्वतिर्यग्गमने, महाभूतानां प्रक्षोभणम्, अभिषिक्तानां मणीनां तस्करं प्रतिगमनम्, अयसोऽयस्कान्ताभिसर्पणञ्चेति।**

अथ यदि मूर्त्यनुविधायिनी क्रिया मनसः तर्हि मूर्त्तत्वात् क्रियासम्बन्धो वाच्य इत्याह सविग्रहे शरीरावरुद्धे मनसि इन्द्रियान्तरसम्बन्धार्थं यज्जाग्रतः कर्मोत्पद्यते तत् कुत इत्याह आत्ममनसोः संयोगादसमवायिकारणाद् इच्छाद्वेषपूर्वकप्रयत्नापेक्षात्। कुत एतदित्थंभूतात् प्रयत्नाज्जाग्रतो मनः क्रियेति ? तदाह अन्वभिप्रायम् इन्द्रियान्तरेण विषयान्तरोपलब्धिदर्शनात्। अभिप्रायमनु इति अभिप्रायानतिक्रमेण। येनैवेन्द्रियेण विषयग्रहणाभिप्रायो भवति तेनैव विषयोपलब्धिदर्शनाद् विज्ञायते अन्तःकरणस्येच्छानुविधायिक्रियाश्रयत्वम्। तेनानधिष्ठितस्येन्द्रियस्य विषयग्राहकत्वासम्भवाद् इति मनः सम्बन्धो

निश्चीयते । स चेच्छानुविधानात् तत्पूर्वकप्रयत्नजनितक्रियाकार्यं इति । सुप्तस्य तु यन्मनसो निरिन्द्रियात्मप्रदेशे प्रलीनस्य इन्द्रियान्तरसम्बन्धार्थं प्रबोधकाले कर्म तदात्ममनसोः संयोगादसमवायिकारणाज्जीवनपूर्वकप्रयत्नापेक्षादुपजायते । तथाहि सुप्तस्य मनःक्रिया, प्रयत्नकार्या, परिगृहीतान्तःकरणक्रियात्वात्, जाग्रदवस्थायां तत्क्रियावत् । अपसर्पणकर्मोपसर्पणकर्म चात्ममनसोः संयोगादसमवायिकारणाददृष्टापेक्षादुत्पद्यत इति । मृतशरीराद् विभागार्थं कर्म अपसर्पणम्, गर्भशरीरेण संयोगार्थम् उपसर्पणमिति । कदा पुनस्तदपसर्पणम्, कथं भवतीत्याह यदा जीवनसहकारिणोरित्यादि । जीवनं व्याख्यातम् । तत्सहकारिणोर्धर्माधर्मयोरुपभोगात् सुखदुःखसंवेदनात् प्रक्षयस्तदा तेन शरीरेण भोक्तव्यस्य कर्मणोऽभावाच्छरीरान्तरोपभोगसम्पादककर्मसद्भावेऽपि शरीरस्य पात एव । अन्योन्याभिभवो वेति सम्भाविनः पक्षान्तरस्योपन्यासः । तथाहि शरीरान्तरोपभोगदायकेन बलीयसा परिपक्वेन कर्मणा आरब्धशरीरस्योपभोगदायकत्वेन अभिप्रवृत्तस्य कर्मणोऽभिभवो भोगदानसामर्थ्यापगमस्तीव्रशब्दोपलम्भेन मन्दस्याग्रहणमिवेति । ततो जीवनसहायस्य कर्मणो वैकल्ये सति तत्पूर्वकस्य प्रयत्नस्य वैकल्याच्च प्राणनिरोधः, तन्निरोधे सति अन्याभ्यां वृत्तिलब्धधर्माधर्माभ्यामिति। वृत्तिः सहकारिकारणम्, तया लब्धौ तत्सहकृतौ यौ धर्माधर्मौ ताभ्यामात्ममनःसंयोगसहकारिभ्यां मृतशरीराद् विभागकारणम् अपसर्पणकर्मोत्पद्यते । ततस्तस्माच्छरीराद् बहिरपगतं ताभ्यामेव धर्माधर्माभ्यां सम्पादितं यद् आतिवाहिकं सूक्ष्मशरीरम्, तेनाभिसम्बद्ध्यते । तत्सङ्क्रान्तश्च स्वर्गं नरकं वा गच्छति, गत्वा चाशयानुरूपेण शरीरेण संयुज्यते, तत्संयोगार्थं कर्म उपसर्पणाख्यमिति । आतिवाहिकशरीरं चागमबलादभ्युपगतम्, अन्तःकरणस्य परिगृहीतत्वादिति । तथा न केवलमेतद् अदृष्टाद् भवति, योगिनाञ्च बहिरुद्रेचितस्येति । बहिर्देशैरुद्रेचितस्य मनसोऽभिप्रेतदेशगमनं पुनः पुनः प्रत्यागमनञ्च । तथा सर्गकाले प्रत्यग्रेण शरीरेण सम्बन्धार्थं कर्म अदृष्टकारितमिति । न केवलमेतद् अन्यदपि च महाभूतेषु यत् कर्म । किं विशिष्टम् ? प्रत्यक्षानुमानाभ्यामनुपलभ्यमानकारणम् उपकारापकारसमर्थमित्यर्थः । तदपि अदृष्टकारितम् । तदेवाह,

यथा सर्गादौ सृष्ट्यादावणुषु कर्म शरीरादिसम्पादनार्थम्, अग्निवाय्वोरूर्ध्वं-तिर्यग्गमने इति। अग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनं प्राणिनामुपकारापकारसमर्थमिति। महाभूतानां भूगोलकदेवकुलादीनां प्रक्षोभणं तत्कम्पनं मणीनां तस्करं चौरं प्रति गमनम्, अयसो लोहस्यायस्कान्ताभिमुखतया अभिसर्पणञ्चेति।

**॥ इति श्रीव्योमशिवाचार्यविरचितायां पदार्थसङ्ग्रहटीकायां कर्मपदार्थः समाप्तः ॥**

## ॥ अथ सामान्यपदार्थनिरूपणम् ॥

**सामान्यं द्विविधम्, परमपरञ्च। स्वविषयसर्वगतमभेदात्मकमनेकवृत्ति एकद्विबहुष्वात्मस्वरूपानुगमप्रत्ययकारि स्वरूपाभेदेनाधारेषु प्रबन्धेन वर्त्तमानमनुवृत्तिप्रत्ययकारणम्। कथम्? प्रतिपिण्डं सामान्यापेक्षं प्रबन्धेन ज्ञानोत्पत्तावभ्यासप्रत्ययजनिताच्च संस्कारादतीतज्ञानप्रबन्धप्रत्यवेक्षणाद् यदनुगतमस्ति तत् सामान्यमिति।**

अथ सामान्यस्य लक्षणपरीक्षार्थं परमपरञ्च द्विविधं सामान्यमित्यादिप्रकरणम्। अत्र च पूर्वं विभागस्याभिधानादनियमज्ञापनेन कार्यकारणभावाशङ्काव्युदासः सामान्यलक्षणविभागयोः, यथा द्रव्यं पृथिव्यप्तेज इत्यादि प्रयोजनमित्युपदर्शयति। स्वविषयसर्वगतमिति विप्रतिपत्तिव्युदासः।

तथाहि परे मन्यन्ते सर्वं सामान्यं सर्वगतम्। गोत्वमश्वपिण्डेष्वप्यस्ति, अश्वत्वञ्च गोपिण्डादिष्वपीति। अनुपलम्भस्तु व्यञ्जकाभावात्। यत्र च व्यञ्जकसद्भावस्तत्राभिव्यक्तिः, यथा गोपिण्डेषु गोत्वस्याश्वपिण्डेऽश्वत्वस्येति।

तच्चासत्। गोत्वस्याश्वादिपिण्डेषु सद्भावे प्रमाणाभावाद्। व्यवस्थिते हि सद्भावेऽभिव्यञ्जकाभावाद् अनुपलब्धिः कल्प्यते। अथ सामान्यं सर्वैः सम्बध्यते, व्यापकत्वादाकाशवदित्य[स्ति?त्र किं]प्रमाणम्। तत्र सर्वैः समवाये साध्ये साध्यविकलमुदाहरणम्, आकाशस्य सर्वत्र समवायाभावात्। संयोगित्वे तु साध्ये सामान्यस्य द्रव्यरूपताप्रसङ्गः। न चैतद्युक्तम्। गुणकर्मसु

समवेतस्योपलम्भाद् । द्रव्यस्य च द्रव्य एव संयोगो नान्यत्रेति, तथा युत-सिद्धयभावाच्च । युतसिद्धानाञ्च संयोग इति । अथ सामान्येन सम्बन्धमात्रं साध्यते ? तत्रापि सिद्धसाधनम्, स्वाधारेण संयुक्तसंयोगस्य सर्वत्र सद्भावात् । तथाहि गोत्वाधारेण संयुक्तमाकाशादि तेन च संयुक्तं सर्वमूर्त्तमिति । एवं व्यापकत्वमपि यदि सर्वैः संयोगित्वम्, तदसिद्धम् । पक्षे तदेव हि सर्वगतत्व-मिति साध्येनाविशेष एव । तथा आकाशादेर्व्यापकत्वेऽपि न सर्वैः सम्बन्ध इत्यनेकान्तः । अथ सर्वैः सम्बन्धः साध्यते सर्वत्र सन्निहितत्वादिति हेतुना ? तदप्यसत् । आकाशादेस्तद्भावे गुणकर्मादिना सम्बन्धाभावात् । न च विशिष्टसम्बन्धानभ्युपगमे भावस्य अन्यसान्निध्यं पश्यामः । अतः स्वविषय-सर्वगतमेव सामान्यम् । गोत्वं गोपिण्डेष्वेवाश्वत्वमश्वपिण्डेष्वेव, तत्रैवोप-लम्भात् ।

अभेदात्मकमनेकवृत्तीति लक्षणं दर्शयति अभेदात्मकमेकस्वभावम् । अनेकत्र वृत्तिर्यस्य तदनेकवृत्तीति । एकत्वे सत्यनेकत्र वर्त्तमानत्वात् सामान्यम्; तथापि अवयविसंख्यादिभिर्व्यभिचारपरिहारार्थं नित्यत्वे सतीति विशेषणमर्थाद् व्याख्येयम् । तथापि सलिलादिपरमाणुरूपादयो नित्याश्चा-नेकत्र वर्त्तन्ते, तदर्थमेकत्वे सतीति विशेषणम् । ते तु अनेकत्वे सत्यनेकत्र वर्तन्ते इति । तथापि एकत्वे नित्यत्वे च सत्यनेकत्र वर्त्तते समवायः, तदर्थं स्वव्यतिरिक्तया वृत्त्या वर्त्तमानत्वे सतीति च विशेषणमध्याहार्यम् ।

सर्वमत्रैव वाक्ये लभ्यते अध्याहारो न कार्य इति चान्ये । तथाहि न विद्यते भेदो नानात्वं विनाशश्च यस्येति तथोक्तम्, तदेवात्मा स्वरूपमस्येति अभेदात्मकमेकमविनाशि चेति लभ्यते । अनेकत्र वृत्तिर्यस्य इति बहुव्रीहिणा वृत्तेर्वृत्तिमतो भेदाऽप्युपदर्शित एव । तस्मादेकत्वे नित्यत्वे च सति सम-वायेन अनेकत्र वर्त्तमानत्वात् सामान्यमितरस्माद् भिद्यते ।

नन्वाश्रयासिद्धमेतल्लक्षणम्, सामान्यसद्भावे प्रमाणाभावात् । यच्चानु-गतज्ञानं न तत् सामान्यसत्तां दर्शयति, कल्पनाज्ञानत्वात् । तथा चानादि-वासनावशादनुगतज्ञानमुत्पद्यते, न पुनर्वास्तवं सामान्यमस्ति । तदुक्तम्

पररूपं स्वरूपेण यया संवृयते धिया ।
एकार्थप्रतिभासिन्या भावान्नाश्रित्य भेदिनः ।। (प्र. वा. ३।६७)

अस्यार्थः । भेदिनः परस्परं व्यावृत्तात्मानो भावास्तेषां रूपं भिन्नम्, स्वरूपेणाभिन्नेन संवृयते प्रच्छाद्यते यया धिया, किं विशिष्टया ? एकार्थप्रतिभासिन्येति । एकश्चार्थः प्रतिभासतेऽस्यां स्वगताकार एव बाह्यः, तस्या निर्विषयत्वादिति ।

तया संवृतनानात्वाः संवृत्या भेदिनः स्वयम् ।
अभेदिन इवाभान्ति भावा रूपेण केनचित् ।। ( प्र. वा. ३।६८ )

अस्यार्थः । स्वयं भेदिनोऽपि भावास्तया संवृत्या संवृतनानात्वाः सन्तः अभेदिन इवाभान्ति, न परमार्थतः । कथं तर्हि सामान्यमुच्यते ? तदाह

तदभिप्रायवशात् सामान्यं सत्प्रकीर्त्तितम् ।
तदसत् परमार्थेन यथा सङ्कल्पितं तया ।। (प्र. वा. १।७१)
परमार्थतोऽसदपि सामान्यं सत् प्रकीर्त्तितम् । ( प्र. वा. ?? )

तदभिप्रायवशादेकाकारप्रतिभासवशादिति । न च सामान्यम्, व्यक्तीनां व्यावृत्तरूपत्वादन्यस्य चाप्रतिभासनादित्याह

व्यक्तयो नानुयन्त्यन्यदनुयायि न भासते ।
ज्ञानादव्यतिरिक्तञ्चेत् कथमर्थान्तरं व्रजेत् ।। ( प्र. वा. ३।७० )

तस्माद् बुद्धिरेव तदन्यव्यतिरेकिणः पदार्थान् आश्रित्योत्पद्यमाना विकल्पिता स्ववासनाप्रकृतिमनुविदधातीति भिन्नमेषां रूपं तिरोधाय अभिन्नमात्मीयं रूपमध्यवस्यति संसृजन्ती संदर्शयति । सा च एकसाधनसाध्यतया बुद्धिवर्तिनामेव भावानां बहिरिव परिस्फुरन्ती सामान्यमित्युच्यते । सा च स्वव्यतिरिक्तेषु भावेषु भवतीति विशेषविषयेत्युच्यते, न परमार्थतः । तस्मादनुगतव्यावृत्तस्वरूपत्वात् सामान्यं विशेषश्च, न तु बाह्या विवेकिनः पदार्थाः । न च तेषु विकल्पवृत्तिः कथं तेषु भवतीति ? परीक्षकाः खल्वेवं विवेचयन्ति जात्या, न तु व्यवहर्त्तारः, ते तु स्वालम्बनामेव बुद्धिमनुगताकारां बहीरूपतया मन्यमाना दृश्यविकल्पावर्थावेकीकृत्य प्रवर्त्तन्ते प्रतिपादयन्ति चेति । न तु नित्यमेकमनुगतं विशेषव्यतिरिक्तं सामान्यं प्रतिभासत इति ।

पुनरप्युक्तम्

शब्दोऽर्थांशकमाहेति तत्रान्यापोह उच्यते ।
आकारः स च नार्थेऽस्ति तं वदन्नर्थभाक्कथम् ।। इति ।।
( प्र. वा. ३।१६७ )

वृत्त्यनुपपत्तेश्च न वास्तवं सामान्यमस्तीति । तथा चैकत्र वर्त्तमानं सामान्यं नैकदेशेन वर्त्तते, तदभावात्; न सर्वात्मना, अन्यत्र वृत्त्यभावप्रसङ्गात् । तथा येनैव रूपेणैकत्र वर्त्तते तेनैव अन्यत्रापीत्यभ्युपगमे सर्वपिण्डानामेकताप्रसङ्गः । अथ स्वरूपान्तरेण, तर्हि स्वरूपभेदात् तस्य नानात्वं प्रसज्यते । स्वभावान्तरनिवृत्तौ चानेकत्र वृत्तित्वं विरुध्यत इत्युक्तम् । देशकालावस्थाविशेषविनियतैकसंसर्गाव्यवच्छिन्नस्वभावान्तरविरहादनेकत्र वृत्तेरेकस्य न देशादिविशेषवता अन्येन योग इति ।

तत्र देशविशेषो नगरादिः, कालविशेषो वसन्तादिः, अवस्थाविशेषो बाल्यादिः, तेषु विनियतः सर्वात्मना प्रतिष्ठितो यथोक्तस्वभावश्चासौ एकश्च, तेन संसर्गः सम्बन्धः, तत्संसर्गेण अव्यवच्छिन्नमक्रोडीकृतम् उक्तस्वभावात् स्वभावान्तरम्, तेन विरहो वियोगः, तद्रहितत्वादिति हेत्वर्थः । अनेकवृत्तेरेकस्येति धर्मिनिर्देशः, न देशादिविशेषवता अन्येन योग इति साध्यधर्मनिर्देशः, रूपादिवदिति दृष्टान्तः । प्रयोगः पुनरेवं भवति यस्य यथोक्तस्वभावान्तरविरहः, न तस्य देशादिविशेषवता अन्येन योगः, यथा रूपादिः । अस्ति च सामान्यादेरसाविति विरुद्धोपलब्धिः । यदि चैकं तेन च स्वरूपेण सर्वैः सम्बध्येत सामान्यम् सर्वपिण्डानामेकदेशकालावस्थायोगिताप्रसङ्गः, तद्देशादिविशेषितपिण्डवृत्तिस्वरूपत्वात् सामान्यस्य । यदा चैकस्मिन् पिण्डे देशादिविशेषिते समुपलभ्यते, तदैवाशेषस्याश्रयविशेषितस्योपलम्भः स्यात्, तस्यैकरूपत्वादिति । अनेकवृत्तित्वानभ्युपगमे च रूपादिवदेकाश्रयत्वात् सामान्यरूपता न स्यादिति ।

न च सामान्यस्य स्वभावान्तरमस्ति येनानेकवृत्तित्वं स्यादित्युक्तम् । न च सामान्यस्य नियताश्रयेण सम्बन्धे नियमहेतुरस्तीति ।

तथा गोत्वं सम्बध्यमानं न गवा सम्बध्यते, गोत्वसम्बन्धात् पूर्वं पिण्डस्य तद्रूपत्वासम्भवात्। अथ अगवा सम्बध्यते, तर्हि तस्याश्वेनापि सम्बन्धः स्यात्, गोत्वाभिसम्बन्धात् पूर्वम् अगोरूपतायाः सर्वत्र साधारणत्वात्। यत्र च गोपिण्डादिर्वर्त्तते न तत्र गोत्वादिसामान्यं समवैतीति तदाश्रयिणा तु सम्बद्धचत इति चित्रम्।

यत्रासौ वर्त्तते भावस्तेन सम्बद्धचते न तु।
तद्देशिनन्तु व्याप्नोति किमप्येतन्महाद्भुतम्॥
(प्र० वा० १।१५५)

तथा पिण्डे व्रजति न सामान्यस्य गमनमस्ति, निष्क्रियत्वात्। नाप्यवस्थानम्, पिण्डस्य तच्छून्यताप्रसङ्गात्। न भागेन गमनमवस्थानञ्च, निरंशत्वात्। नापि पश्चादागत्य अभिसम्बद्धचते, पूर्वं तच्छून्यस्यानुपलब्धेः। तदुक्तम्

न याति न च तत्रासीदस्ति पश्चान्न चांशवत्।
जहाति पूर्वं नाधारमहो व्यसनसन्ततिः॥
(प्र० वा० ३।१५१)

तदेतदसत्। जातिप्रद्वेषान्धतया प्रमाणमार्गपरिभ्रष्टैरभिहितमिति समाधीयते। तथा हि चक्षुरादिव्यापारेण अनुगतज्ञानस्याबाध्यमानस्योपलब्धेरवश्यमनुगतं निमित्तं वाच्यम्। न च वासनैव निमित्तम्, तस्याः पूर्वमेव प्रतिषेधात्। यदि च वासना विशिष्टप्रत्ययहेतुर्बाह्या चेति, संज्ञाभेदमात्रमेव स्यात्। बोधान्तर्भावे तु बोधरूपतया तस्याः सर्वत्राविशेषाद् विकल्पवैचित्र्यं न स्यात्, गोपिण्डदर्शनाद् गवाकारो विकल्पोऽश्वपिण्डदर्शनाच्चाश्वाध्यवसायी इत्यादि। न च देशादिभेदेनापि अबाध्यमानोऽध्यवसायो निर्विषयः सम्भवतीति "पररूपं स्वरूपेण यया संव्रियत" (प्र० वा० १।६९) इत्यपास्तमेव।

यच्चेदम् 'व्यक्तयो नानुयन्त्यन्यदनुयायि न भासत' इति, असदेतत्, अनुगतज्ञानेन तस्य प्रतिभासनात्। यथाहि स्वलक्षणं व्यावृत्तरूपतया प्रतिभासनाद् अस्ति एवम् अनुगतस्वरूपतया प्रतिभासनात् सामान्यमप्यस्तीति। यदि च व्यावृत्तिज्ञाने सामान्यस्याप्रतिभासनाद् असत्त्वम् [स्यात्]?

अनुगतज्ञानेऽपि स्वलक्षणस्याप्रतिभासनाद् असत्त्वम् [एव स्यात्]। तस्माद् यथा अबाध्यमानज्ञाने नीलादेः प्रतिभासनात् सत्त्वम्, एवमनुगतज्ञाने प्रतिभासनात् सामान्यस्यापि सत्त्वमभ्युपगन्तव्यम्। वृत्तिविकल्पादेर्बाधकस्याप्रमाणत्वादिति। तथा हि वृत्त्यनुपपत्तेरसत्त्वमिति नेदं स्वतन्त्रसाधनम्, अनेकान्तात्। स्वतन्त्रे हि रूपादीनां सत्त्वमनुपपद्यमानवृत्तित्वञ्चेति। एवं परपक्षेऽनुपपद्यमानवृत्तित्वेऽपि आकाशादीनां सत्त्वमिति। स्वरूपासिद्धश्च, वृत्तेः समवायस्य सत्त्वात्। एकदेशेन सर्वात्मना च न वर्त्तत इति अयुक्तो विशेषप्रतिषेधः, प्रकारान्तरस्यासम्भवात्। अभिन्नस्वरूपत्वाच्च सामान्यस्य न तत्र एकदेशसर्वशब्दयोः प्रवृत्तिः, तयोर्भिन्नेष्वेव प्रवृत्तिदर्शनात्। समवायेन च वर्त्तते सामान्यम्, नैकदेशेन स्वरूपेण वा, तस्य एकदेशस्य स्वरूपस्य चावृत्तिरूपत्वादिति। यदेव चैकस्मिन् पिण्डे स्वरूपं सामान्यस्य तदेव पिण्डान्तरेऽपि, अनुगतज्ञानजनकत्वस्य सर्वत्र सम्भवात्। तदाह एकद्विबहुषु पिण्डेष्वात्मस्वरूपानुवृत्तिदर्शनात् स्वप्रत्ययकारणमिति। सामान्यस्यात्मस्वरूपमनुवृत्तमभिन्नम्, अतोऽनुवृत्तिप्रत्ययस्यानुगतज्ञानस्य कारणमिति।

न च सामान्यस्याभेदे पदार्थानां तथाभावः, ततोऽन्यत्वात्। अत एव नैकस्मिन् देशादिविशेषिते पिण्डे सामान्यस्योपलम्भाद् अशेषविशेषितस्याप्युपलम्भप्रसङ्गः, तेषामनियतदिग्देशसम्बन्धित्वेनोपलम्भाभावात्। यथैव च क्रमेण विशेषा उपलभ्यन्ते तथैव तद्विशेषितं सामान्यमपीति। यदा हि बालाद्यवस्थाविशेषिताप[ण्य ? ञ्च] पुरावस्थितगोपिण्डानां वसन्तसमये नामुपलम्भस्तदा तद्विशेषितं सामान्यमुपलभ्यते अन्यदा त्वन्यैर्विशेषितमिति तस्मादपिण्डेष्वनुगतज्ञानजनकत्वं सामान्यस्य सर्वत्राव्यभिचारिस्वरूपम्। तस्माद-

भेदात्मकमनेकवृत्ति च सामान्यं प्रत्यक्षेणोपलम्भाद् अभ्युपगन्तव्यम्। यथा हि रूपमेकमेव एकत्र वर्तमानं प्रत्यक्षेणोपलब्धं तद्वदेकं सामान्यमनेकत्रेति।

यच्चेदं देशादिविशेषितस्वभावाद् अनेकवृत्तेरेकस्य न देशादिविशेषवता अन्येन योग इत्युक्तम्, तत्र व्यर्थविशेषणता हेतोर्धर्मिणश्च। तथा हि एकसंसर्गाव्यवच्छिन्नस्वभावान्तरविरहान्न सामान्यस्य विशेषान्तरेण

योग इति प्रतिषेधे साध्ये व्यभिचाराभावात् साध्यसाधनयोर्देशादिविशेषणमनर्थकम्, व्यवच्छेद्यसद्भावे हि विशेषणस्यार्थवत्तोपपत्तेः ।

अथ यथोक्तस्वभावान्तरविरहे कथमन्ययोगः सामान्यादेः, अन्ययोगे वा कथं यथोक्तस्वभावान्तरविरहः ? तयोरन्यत्र रूपादौ प्रतिबन्धसिद्धिरिति चेत्, न, व्यभिचारात् । तथा हि रूपाश्रयस्य रूपसंसर्गाव्यवच्छिन्नस्वभावान्तरविरहेऽपि रसादिभिर्योगो दृष्टः; तद्वत् सामान्यस्याप्याश्रयान्तरेण योगः केन वार्यते, रूपाश्रयवत् सामान्येऽपि यथोक्तस्वभावान्तरासत्त्वस्याविशेषादिति । अस्ति च रूपस्याश्रयो द्रव्यमित्युक्तम् ।

अथैकत्वात् सामान्यस्य अनेकत्र समवायः प्रतिषिद्ध्यते ? तर्हि यदनेकत्र समवेतम् तदनेकमेवेत्यभ्युपगमे हेतोर्व्यतिरेकाव्यभिचारेणैव गमकत्वाद् एकत्र समवेतानां रूपादीनामेकता प्रसज्येत, न चैतदस्ति । अथ एकत्वादेकत्रैव समवायः साध्यते ? तदप्यनैकान्तिकम् । आकाशादेरेकत्वेऽप्येकत्रैव समवायाभावात् । यद्यनेकत्र समवायादनेकत्वप्रसङ्गोऽभिधीयेत्, तथापि यदेकं तदेकत्र समवेतमिति व्यतिरेकाभावः, सत्यपि आकाशादावेकत्वे तदभावात् । एकत्र समवायादेकत्वम् इत्येतदपि रूपशब्दादिभिरनैकान्तिकम् । एकत्वस्य सामान्यविशेषरूपत्वात् तस्मिन् साध्ये हेतोरन्वयव्यतिरेकाभावादगमकत्वम् । एवं निर्विशेषणस्य हेतोरन्तरः साध्यसाधनभावप्रकारो निरस्तः । तथा सविशेषणस्यापि हेतोराकाशादिनानैकान्तिकत्वम्, तस्य हि देशादिविशेषवता अन्येन योगेऽपि तथोक्तस्वभावान्तरविरहोपलब्धेः ।

यच्चेदं प्रदीपप्रभाया देशादिविशेषणविशिष्टाया न देशादिविशेषवता अन्येन योग इत्युदाहरणम्, तत्रापि उत्पत्तेरूर्ध्वमवयवक्रियाक्रमेण विनाशाभ्युपगमाद् अनेककालव्यवधाने देशादिविशेषवता अन्येनापि योगः सम्भवत्येव । न च प्रदीपप्रभायां साध्यसाधनसद्भावेऽपि हेतोर्व्यभिचारोपदर्शनाद् गमकत्वम् । तथा सामान्यस्य स्वभावान्तरविरहोऽसिद्धः, तदाधारान्तरस्य तद्विशेषकत्वेन तत्स्वभावान्तरत्वात् । प्रतीयते चाधाराधेययोर्विशेषणविशेष्यभावः, यथा सद्द्रव्यम्, द्रव्यस्य सत्तेति । तस्मात् स्वभावान्तरविरहोऽपि साध्य एवेति । तथानेकवृत्तेरेकस्य न देशादिविशेष[व]ता

अन्येन योग इति प्रसङ्गनिर्देशे स्ववचनविरोधः। तथाहि अन्ययोगप्रतिषेधे न अनेकवृत्तित्वं भवतीति। अथ सामान्यादिपर्यायोऽयमनेकत्र वृत्तिरिति। तथाप्यनेकवृत्ति[त्व] प्रतिषेधोऽनुपपन्नः, सामान्यस्व नित्यत्वैकत्वे सत्यनेकवृत्तित्वलक्षणत्वात्। प्रत्यक्षेण च सामान्यस्य अनेकवृत्तित्वप्रसिद्धेः, तेन बाध्यत्वादनुमानमप्रमाणम्। तथा हि एकद्विबहुषु पिण्डेष्वक्षव्यापारादनुगतज्ञानमुत्पद्यमानं दृष्टम्। न चेदं भ्रान्तम्, प्रत्यक्षागमसंवादेन विसंवादनिवृत्तौ तद्व्याप्तस्य भ्रान्तत्वस्य निवृत्तेरिति।

न च अपोहादेवानुगतज्ञानम्, तस्य व्यावृत्तिरूपतायामवस्तुत्वेनाजनकत्वात्, जनकत्वे वा तस्य अर्थक्रियाकारित्वात् वस्तुत्वप्रसङ्गः। अथ व्यावृत्तादन्या व्यावृत्तिर्नेष्यते ? तर्हि तेषां परस्परव्यावृत्तस्वरूपतया अनुगतज्ञानजनकत्वं न स्यात्।

यच्चेदम् अगोव्यावृत्तिर्गोत्वम् इत्युक्तम्, तत्र गवां स्वरूपप्रतिपत्तिमन्तरेण ततोऽन्येषामगोरूपतायामप्रसिद्धिः, तदप्रसिद्धौ च न गवां स्वरूपप्रतिपत्तिरित्यन्योन्याश्रयत्वं स्यात्। यदि चैकस्माद् गोपिण्डादन्येषामगोरूपता तर्हि गोपिण्डानामप्यन्येषामगोरूपताप्रसङ्गः, तेषामप्येकस्माद् गोपिण्डादन्यत्वात्।

अथ सर्वस्माद् गोपिण्डादन्येषामगोत्वम्, तदसत्, वर्गीकरणनिमित्तासम्भवे सर्वेषां गोपिण्डनामप्रतिपत्तौ ततोऽन्येषां प्रतिपत्तुमशक्यत्वात्। येषाञ्च अनुगतमभिन्नं निमित्तमस्ति तेषां गोस्वरूपप्रसिद्धौ ततोऽन्यव्यावृत्तिः प्रतीयत एव। अथ अर्थक्रियासामान्यादनुवृत्तिप्रत्यय इति चेत्, न, अर्थक्रियाणामपि परस्परं व्यावृत्ततया अनुगतज्ञानाजनकत्वात्। अथ अर्थक्रियाणामनुगतमभिन्नं निमित्तमुपग्राहकमिष्येत, तदेव तर्हि सामान्यम्।

का चेयमर्थक्रिया यत्साम्यादनुगतज्ञानमिति वाच्यम्। यदि वाहादिरूपा ? सा च मनुष्यादावपि सम्भवतीति तत्रापि गौगौरित्यनुगतज्ञानप्रसङ्गः। न च पक्षे सर्वत्रैतदस्तीत्यनुगतज्ञानाभावप्रसङ्गः।

अथ ज्ञानमेवानुगतव्यावृत्ताकारं सामान्यमिति चेत्, सोऽयम् 'अश्वारूढस्य विस्मृतोऽश्वः' इति न्यायः, न ह्यनुगतनिमित्तं विना अनुगतज्ञानं सम्भवति, वासनादेर्निमित्तस्य प्रतिषेधात् ।

यदपीदं सामान्यस्याधारे व्रजति, गमने क्रियावत्त्वम्, अवस्थाने चानाधारत्वमिति । तदसत् । बाधकोपपत्तौ गमनप्रत्ययस्य भाक्तत्वात् । तथा च मूर्त्तत्वेन क्रियावत्त्वं व्याप्तम्, तच्च सामान्यादिभ्यो व्यावर्त्तमानं स्वव्याप्तं क्रियावत्त्वं गृहीत्वा व्यावर्त्तत इति निष्क्रियं सामान्यादि, मूर्त्तत्वे सत्येव अन्वयव्यतिरेकाभ्यामर्थेषु क्रियोपलब्धेः । सैव योग्यता, तदभावाच्चाकाशादौ क्रियाभावो न विभुत्वप्रतिबन्धात्, तदभावे हि गुणकर्मादावपि क्रियावत्त्वप्रसङ्गात् । यदि च कस्यचित् सामान्याधारस्य गमनात् सामान्यस्यापि गमनम्, तर्हि तस्यावस्थानेऽवस्थानञ्चेति 'न गच्छेन्नापि तिष्ठेत्' इति दुरुद्धरं व्यसनमापद्येत । तस्मात् संयोगविभागैकार्थसमवायाद् आधारगतं गमनमाधेयेऽप्यारोप्य प्रतिपद्यते सामान्यं गच्छति इति ।

यच्चेदम् 'न याति न च तत्रासीदस्ति पश्चान्न चांशवत्' इत्युक्तम्, तत्सामान्यस्वरूपोपवर्णनम्, न तस्य प्रतिषेधपरम् । द्रव्यस्वरूपानुपलम्भेन सामान्यस्यासत्त्वे सर्वस्याप्यसत्त्वं स्यात्, तदितरासत्त्वस्य सर्वत्राविशेषात् । सामान्यञ्च विशेषेष्वनुवर्त्तमानं प्रत्यक्षेणैव प्रसिद्धमिति तस्यानुपलम्भोऽसिद्धः । यदि च असत्त्वं सामान्यस्य, कथं स्वलक्षणविषयं प्रत्यक्षं सामान्यविषयमनुमानमिति स्यात् । अथ

अतद्रूपपरायत्तवस्तुमात्रप्रकाशनात् ।
सामान्यं सदिति प्रोक्तं लिङ्गभेदाप्रतिष्ठितेः ।। (धर्मकीर्त्तिः ?) इति ।

अयमस्यार्थः, दाहपाकादिसमर्थाग्निव्यतिरेकिणो जलादयोऽतद्रूपाः, तेभ्यो व्यावृत्तस्य तार्णपार्णादिविशेषरहितस्याग्निमात्रस्य ज्ञापनात् सामान्यविषयो धूमः, तथा धूमज्ञानमपि अधूमव्यावृत्ततार्णादिविशेषरहितधूममात्रविषयमिति ।

नैतद्युक्तम् । सामान्यानभ्युपगमे मात्राभिधानस्य अर्थासम्भवात् । न चापोह एव मात्राभिधानस्यार्थः, तस्य अवस्तुत्वेनाजनकत्वात् । वस्तुत्वे च

वास्तवमेव सामान्यमभ्युपगतमिति कः प्रतिकूलोऽनुकूलमाचरतीति ? न चाग्निव्यक्तीनां सामर्थ्यम्, तद्ग्राहकाविनाभावस्यैवाप्रसिद्धेः । न च धूमोपलम्भादग्निसामस्त्यप्रतिपत्तिर्दृष्टेति । अथ तार्णादीनामन्यतमो विशेषो मात्राभिधानविषयः ? तर्हि कथं सामान्यविषयमनुमानम् । न चाग्निव्यक्तिषु विशिष्टार्थक्रियाकारितया समाना बुद्धिः, क्रियाणामपि परस्परं व्यावृत्तत्वादित्युक्तन्यायात् । एतेन यदुक्तम्

लिङ्गलिङ्गिधियोरेव पारम्पर्येण वस्तुनि ।
प्रतिबन्धात् तदाभासशून्ययोरप्यवञ्चनम् ।। (प्र. वा. २।८२)

इत्येतदपास्तं भवतीति । तयोर्द्वयोः सामान्याभावे पारम्पर्येणापि वस्तुप्रतिबन्धाभावात् ।

न च अधूमव्यावृत्ताकाराद् विकल्पाद् अनग्निव्यावृत्ताकारो विकल्पः, तयोरविनाभावस्याप्रसिद्धेः । अग्निप्रतिपत्तिमन्तरेणानग्नयो न प्रतीयन्ते, तदप्रतिपत्तौ नाग्निप्रतिपत्तिरितरेतराश्रयत्वप्रसङ्गात् । न च कार्यत्वेन धूमस्य गमकत्वमित्युक्तं व्याप्तिसमर्थनावसरे । तस्मात् सामान्यवतामविनाभावप्रसिद्धेरनुमानमिच्छता अवश्यं सामान्यमभ्युपगन्तव्यम् । अन्यथा हि वास्तवसामान्यं विना भावस्याप्रसिद्धौ सङ्केताप्रतिपत्तेश्च नानुमानशब्दयोः प्रमाणता स्यादिति । अस्ति च तयोः प्रामाण्यम् । तस्मादर्थप्रतिपत्तौ प्रवर्त्तमानस्य अर्थक्रियासंवादेन विसंवादिनिवृत्तौ तद्व्याप्तस्य भ्रान्तत्वस्य निवृत्तिरित्युक्तं पूर्वम् । अतः स्वात्मरूपानुवृत्तिप्रत्ययकारणमिति ।

सङ्ग्रहवाक्यस्य विवरणमाह स्वरूपाभेदेनैकरूपेणाधारेषु शाबलेयादिपिण्डेषु प्रबन्धेनानुपरमेण पूर्वपिण्डापरित्यागेन समवायवृत्त्या वर्त्तमानमनुवृत्तिबुद्धिकारणमिति । एकद्विबहुष्वित्यस्य विवरणमाधारेष्विति । अभेदात्मकपदस्य तु स्वरूपाभेदेनेति । कथम् इत्यव्युत्पन्नप्रश्नः, विपर्यस्ताक्षेपो वा । तथा चैकपिण्डोपलम्भकाले नानुगतं सामान्यं प्रतिभाति । द्वितीयपिण्डोपलम्भकालेऽपि प्रथमपिण्डस्याग्रहणादनुगतज्ञानाभाव एव । यत्रापि एकं ज्ञानमनेकपिण्डालम्बनम्, तत्राप्यनुगज्ञानस्यानुपलम्भ एव इत्याक्षेपे सति प्रतिसमाधानमाह प्रतिपिण्डं सामान्यापेक्षमित्यादि ।

पिण्डं पिण्डं [प्रति] प्रबन्धेन सातत्येन ज्ञानानामुत्पत्तिः, तस्याञ्च सत्यां पूर्वपूर्वानुभवजनितसंस्कारापेक्ष उत्तरोत्तरप्रत्ययोऽभ्यासः, तेन जनितः संस्कारः, तस्माच्चातीतज्ञानप्रबन्धप्रत्यवेक्षणं भवति। अतीतश्चासौ ज्ञानप्रबन्धश्च, तस्मिन् प्रत्यवेक्षणं स्मरणं भवति। ज्ञायत इति ज्ञानम्, ज्ञप्तिश्च ज्ञानम् इत्युभयविषयं स्मरणं भवतीति। एतत् सदृशो मया प्रागुपलब्ध इत्येवं स्मरणात् समनुगतं यदस्तीति ज्ञायते, तत् सामान्यमिति। तत्सदृशोऽयमिति प्रत्यभिज्ञानाच्च यत् तत्सादृश्यं भिन्नेष्वभिन्नप्रत्ययजनकम् तत्सामान्यमिति व्यवस्थितम्।

**तत्र सत्ता परं सामान्यमनुवृत्तिप्रत्ययकारणमेव। यथा परस्परविशिष्टेषु चर्मवस्त्रकम्बलादिष्वेकस्मान्नीलद्रव्याभिसम्बन्धाद् नीलं नीलमिति प्रत्ययानुवृत्तिः, तथा परस्परविशिष्टेषु द्रव्यगुणकर्मस्वविशिष्टा सत्सदिति प्रत्ययानुवृत्तिः, सा चार्थान्तराद् भवितुमर्हतीति यत् तदर्थान्तरं सा सत्तेति सिद्धा। सत्तानुसम्बन्धात् सत्सदिति प्रत्ययानुवृत्तिः, तस्मात् सा सामान्यमेव।**

भेदं निरूपयति तत्र सत्ता परं सामान्यम्। अत्र च महाविषयत्वादित्युक्तमेव साधनम्। सा तु सत्ता सामान्यमेव। कुतः? यतोऽनुवृत्तिप्रत्ययस्यैव कारणम्। यद्यपि अभावादिभ्यो व्यावृत्तिज्ञानस्यापि हेतुः, तथापि सामान्यवत्सु अनुवृत्तामेव बुद्धिं जनयति, न व्यावृत्ताम्। अतः सामान्यमेवेति।

तत्र सामान्यमात्रस्य सद्भावे व्यवस्थापिते विस्पष्टार्थं सत्तायाः सद्भावानुमानमाह; यद्वा पूर्वं प्रत्यक्षमुक्तमिदानीमनुमानमुच्यते। तत्र व्याप्तिसमर्थनार्थं दृष्टान्तं व्याचष्टे, यथा परस्परविशिष्टेषु व्यावृत्तेषु चर्मवस्त्रकम्बलादिषु अन्यस्मादर्थान्तरभूताद् नीलद्रव्यसम्बन्धान्नीलं नीलमिति प्रत्ययानुवृत्तिः तथा परस्परविशिष्टे द्रव्यगुणकर्मसु अविशिष्टा सत् सदिति प्रत्ययानुवृत्तिरिति दार्ष्टान्तिकनिरूपणम्। सा च प्रत्ययानुवृत्तिरर्थान्तरसम्बन्धाद् भवितुमर्हति, यत्तदर्थान्तरं सा सत्तेति सिद्धा। सत्तासम्बन्धात्

सत्सदिति प्रत्ययानुवृत्तिः, तस्मात् सामान्यमेव । प्रयोगस्तु द्रव्यगुणकर्मसु सत्सदिति प्रत्ययः, विशेष्यव्यतिरिक्तानुगतनिमित्तनिबन्धनः, भिन्नेष्वनुगत- प्रत्ययात्, कम्बलादिषु नीलद्रव्यसम्बन्धान्नीलं नीलमिति ज्ञानवत् । सामान्येन च विशेष्यव्यतिरिक्तानुगतनिमित्तनिबन्धनत्वे साध्ये न पाचकादिज्ञानैर्व्यं- भिचारः, तेषामपि सपक्षत्वात् । तथाहि पाचक इति ज्ञाने पचिक्रिया निमित्तम्, तदभिज्ञता वा, तत्सद्भावे क्रियोपरमेऽपि पाचक इति व्यवहा- रात् । एवं दण्डीति ज्ञाने दण्डो निमित्तम्, शुल्क इति ज्ञाने च गुणो निमि- त्तमिति सर्वत्र व्यतिरिक्तमेव निमित्तम् । दण्डादेस्तु परस्परं विलक्षणत्वाद् अनुगतज्ञानोत्पत्तौ एकमभिन्नं निमित्तमुपग्राहकमभ्युपगन्तव्यम् । अन्यथा ह्यनुगतज्ञानाजनकत्वमेव स्यात् । अतो दण्डेषु दण्डत्वम्, शुक्लादिषु च तत्सामान्यमिति वाच्यम् ।

यच्चेदं सामान्यं सामान्यमित्यनुगतज्ञानम् अत्राप्येकत्वे नित्यत्वे सत्य- नेकत्र समवायो निमित्तम् । एवं सर्वत्र निमित्तान्तरमभ्यूह्यम् ।

**अपरं द्रव्यत्वगुणत्वकर्मत्वादि अनुवृत्तिव्यावृत्तिहेतुत्वात् सामान्यं विशेषश्च भवति । तत्र द्रव्यत्वं परस्परविशिष्टेषु पृथिव्या- दिष्वनुवृत्तिहेतुत्वात् सामान्यम्, गुणकर्मभ्यो व्यावृत्तिहेतुत्वाद् विशेषः । तथा गुणत्वं परस्परविशिष्टेषु रूपादिष्वनुवृत्तिहेतुत्वात् सामान्यम्, द्रव्य- कर्मभ्यो व्यावृत्तिहेतुत्वाद् विशेषः । तथा कर्मत्वं परस्परविशिष्टे- षूत्क्षेपणादिष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यं द्रव्यगुणेभ्यो व्यावृत्ति- हेतुत्वाद् विशेषः ।**

**एवं पृथिवीत्वरूपत्वोत्क्षेपणत्वगोत्वघटत्वपटत्वादीनामपि प्राण्य- प्राणिगतानामनुवृत्तिहेतुत्वात् सामान्यविशेषभावः सिद्धः । एतानि तु द्रव्यत्वादीनि प्रभूतविषयत्वात् प्राधान्येन सामान्यानि, स्वाश्रयविशेष- कत्वाद् भक्त्या विशेषाख्यानीति ।**

अपरं द्रव्यत्वगुणत्वकर्मत्वादि इत्यादिपदेन पृथिवीत्वादेर्ग्रहणम् । अनुवृत्तिव्यावृत्तिप्रत्ययहेतुत्वात् सामान्यं विशेषश्च भवतीति तदेवाह तत्र

द्रव्यत्वं परस्परविशिष्टेषु व्यावृत्तस्वरूपेषु पृथिव्यादिष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यम्, गुणकर्मभ्यो व्यावृत्तिप्रत्ययहेतुत्वाद् विशेषः। यथा द्रव्यत्वम् तथा गुणत्वमपि परस्परविशिष्टेषु रूपादिष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यं द्रव्यकर्मभ्यो व्यावृत्ति[प्रत्यय]हेतुत्वाद् विशेषः। तथा कर्मत्वं परस्परविशिष्टेषूत्क्षेपणादिष्वनुवृत्ति[प्रत्यय]हेतुत्वात् सामान्यम्, द्रव्यगुणेभ्यो व्यावृत्ति [प्रत्यय]हेतुत्वाद्विशेषः। एवं पृथिवीत्वरूपत्वोक्षेपणत्वगोत्वघटत्वपटत्वादीनामपि प्राण्यप्राणिगतानामनुवृत्तिव्यावृत्ति[प्रत्यय]हेतुत्वात् सामान्यविशेषभावः सिद्ध इत्यतिदेशः। प्राणसम्बन्धिनि पिण्डे गतानि गोत्वाश्वत्वादीनि, अप्राणिगतानि पृथिवीत्वादीनि प्राणशून्याधारगतानि, स्वभेदेऽनुवृत्तिप्रत्ययहेतुत्वाद् भेदान्तराद् व्यावृत्तिप्रत्ययहेतुत्वाच्च[तेषां]सामान्यविशेषभावः सिद्ध इति।

न चैकस्य वस्तुनो द्वैरूप्यानुपलब्धेः कथं तदेव सामान्यं विशेषश्चेति ? अथैकमत्र पारमार्थिकम्, अन्यच्चोपचरितमित्यविरोधः। तत्र किं मुख्यवृत्त्या सामान्यानि, विशेषा वेत्याह एतानि द्रव्यत्वादीनि प्रभूतविषयत्वात् प्राधान्येन मुख्यवृत्त्या सामान्यानि। न हि विशेषाणां प्रभूतविषयत्वं सम्भवति, एकैकद्रव्यवृत्तित्वात्। स्वाश्रयविशेषकत्वाद् भक्त्या उपचारेण विशेषाख्यानीति। व्यावृत्तिप्रत्ययजनकत्वं विशेषाणां स्वरूपम्, तस्येहाप्युपलब्धेरुपचारः प्रवर्त्तत एव। तथाहि द्रव्यत्वादि सामान्यं स्वाश्रयमाश्रयान्तराद् व्यावृत्तं विशिनष्टि व्यावर्त्तयतीति इत्यतो विशेषाख्यामपि लभते।

**लक्षणभेदादेषां द्रव्यगुणकर्मभ्यः पदार्थान्तरत्वं सिद्धम्। अत एव च नित्यत्वम्। द्रव्यादिषु वृत्तिनियमात् प्रत्ययभेदाच्च परस्परतश्चान्यत्वम्। प्रत्येकं स्वाश्रयेषु लक्षणाविशेषाद् विशेषलक्षणाभावाच्चैकत्वम्। यद्यप्यपरिच्छिन्नदेशानि सामान्यानि भवन्ति, तथाप्युपलक्षणनियमात् कारणसामग्रीनियमाच्च स्वविषयसर्वगतानि। अन्तराले च संयोगसमवायवृत्त्यभावादव्यपदेश्यानीति।**

अथ द्रव्यत्वादीनि द्रव्यगुणकर्मभ्योऽर्थान्तरम् स्वरूपाणि वा इत्याह लक्षणभेदादेषां द्रव्यगुणकर्मभ्यः पदार्थान्तरत्वं सिद्धम्। तच्चोक्तमभेदात्मक-

मनेकवृत्तीति पदेन । अत एव च नित्यत्वम् । यत एव द्रव्यादिभ्यः पदार्थान्तरत्वम्, अत एव च नित्यत्वम् । द्रव्यगुणकर्मात्मकस्य भावस्यानित्यत्वोपलब्धेः ।

ननु चानुत्पत्तिमत्त्वेन नित्यत्वम्, न द्रव्यादिभ्यः पदार्थान्तरत्वेन, सामान्यादित्रयस्यापि नित्यत्वेन साध्यत्वात् । नैतदेवम् । यतो द्रव्यादिभ्यो विभिन्नस्वरूपसम्बन्धित्वेन प्रतिभासनाद् अर्थान्तरत्वम्, अत एव च नित्यत्वम्, उत्पत्तिविनाशकारणासम्भवात् । तथाहि सामान्यस्योत्पत्तिकारणं नास्ति, तदाधाराणां युगपदसम्भवेन, समवायिकारणाभावादित्येवं निर्णीतं पदार्थसङ्करे ।

अथैकमेव सामान्यं सत्तालक्षणमुपाधिभेदाद् भिन्नप्रत्ययसम्पादकमित्येतस्य निरासार्थमाह द्रव्यादिषु वृत्तिनियमात् प्रत्ययभेदाच्च परस्परतश्चान्यत्वमिति । [ए?द्रव्ये]ष्वेव द्रव्यत्वम्, गुणेष्वेव गुणत्वमित्यादिवृत्तिनियमः । प्रत्ययभेदस्तु द्रव्येष्वेव द्रव्यं द्रव्यमिति द्रव्यत्ववशाज्ज्ञानम्, गुणेषु च गुणत्वयोगाद् गुणो गुण इत्यादि । तस्मात् प्रत्ययभेदाद् द्रव्यादिषु वृत्तिनियमाच्च परस्परतोऽप्यन्यत्वम् । अन्यथा हि सर्वपदार्थेष्वेकत्वात् सामान्यस्य वृत्तिनियमः प्रत्ययभेदश्च न स्यात् ।

अथास्तु परस्परतोऽन्यत्वम्, तथापि स्वाश्रयेषु द्रव्यमिति द्रव्यत्ववशाज्ज्ञानं गुणेषु च गुण इत्यादि यस्मात् तत् किमेकमनेकं वेत्याशङ्कानिरासायाह प्रत्येकं स्वाश्रयेष्वेकं द्रव्यत्वम्, गुणेष्वेकं गुणत्वम्, इत्येवं शेषेष्वपीति । कुत एतत् ? लक्षणाविशेषात्, अनुगतस्वरूपाविशेषात् । यद् वा लक्ष्यतेऽनेनेति वा लक्षणम्, द्रव्यं द्रव्यमित्याद्यनुगतज्ञानम्, तस्य अविशेषा[द्] एव द्रव्येषु द्रव्यत्वम्, गुणेषु गुणत्वमन्यथा ह्य[न]नुगतज्ञानमेव स्यात् ।

अथ रूपभेदानामनेकत्वेऽपि रूपं रूपमिति ज्ञानमस्ति । सत्यमेतत् । न चैवमत्र भेदव्यवस्थापकं नीलादिज्ञानस्य भेदव्यवस्थापकस्योपपत्तेः । अथैकस्मिन्नेव देशे प्रमाणमस्तीत्याह विशेषलक्षणाभावाच्चैकत्वमिति । अथैकस्मिन्नेव देशे समुत्पद्यमानस्य घटादेः प्रतिनियतसामान्यसम्बन्धे हेतुर्वाच्यः, अन्यथा

ह्यनियतदेशत्वात् सामान्यानां नियतेन धर्मिणा सम्बन्धो न स्यादित्याह यद्यपि अपरिच्छिन्नदेशानि सामान्यानि, तथापि उपलक्षणनियमात् कारणसामग्रीनियमाच्च स्वविषयसर्वगतानीति । उपलक्ष्यतेऽनेनेत्युपलक्षणमनुगतज्ञानमेव । तथाहि द्रव्यं द्रव्यमित्यनुगतं ज्ञानं द्रव्येष्वेव, न गुणादौ, अतः स्वविषयसर्वगतमेव द्रव्यत्वम्, विषयान्तरे तत् सद्भावे प्रमाणाभावात् । एवं गुणत्वादावपीति । उपलक्षणं सामान्याभिव्यञ्जकं वा तन्नियमात् स्वविषयसर्वगतम् । तथाहि सास्नाद्युपलक्षितपिण्डस्य गोत्वेनाभिसम्बन्धः, केसराद्युपलक्षितस्याश्वत्वेनाभिसम्बन्ध इत्येवं सर्वत्र नियतं सद् व्यञ्जकमभ्यूह्यम् ।

अथास्तु व्यञ्जकनियमात् स्वविषय एवोपलम्भात् स्वविषयसर्वगतत्वमत्र कारणं वाच्यम्, नियामकाभावे नियताश्रयसम्बन्धस्यैवाभावप्रसङ्गादित्याह कारकसामग्रीनियमाच्च स्वविषयसर्वगतमिति । तथाहि गोत्वजातिसम्बन्धोपभोगित्वप्रापकादृष्टोपलक्षितसामग्रीसम्पादितो गोपिण्डो नाश्वादि इतरः, तन्नियमात् स एव गोत्वेनाभिसम्बध्यते नान्यः, तथा अश्वत्वजातिसम्बन्धोपभोगप्रापकादृष्टोपलक्षितसामग्रीजन्यत्वाद् अश्वपिण्डोऽश्वत्वेनाभिसम्बद्ध्यत इति । एवमन्यत्राऽपीति । अतो यदुक्तं 'यत्रासौ वर्त्तते भावस्तेन सम्बद्ध्यते न तु' इत्यादि, तदपास्तम् । नियताश्रयसमवेतस्यैवोपलम्भसिद्धौ नियमकारणस्यानभिधानात् ।

यच्चेदं किं गौर्गोत्वेनाभिसम्बध्यते अथागौरिति चोद्यम्, तन्न प्रतिसमाधानार्हम्, निष्ठासम्बन्धयोरेककालत्वादिति । स्वकारणैः सत्तादिभिश्च पिण्डस्याभिसम्बन्ध एवात्मलाभः, न पूर्वं तस्य गोरूपताऽगोरूपता वा, तत्सत्त्वस्यैवासम्भवात् ।

अथ यथा मणिमन्त्रौषधादीनि विशिष्टार्थक्रियासम्पादनसमर्थानि स्वकारणादुत्पन्नानि एवं गोपिण्डा गौरितिज्ञानोत्पादनसमर्थाः स्वकारणादेवोत्पन्ना न अश्वादिज्ञानमुत्पादयन्तीति चेत्, तर्हि यत् तत् सामर्थ्यं येन सता गौरित्यनुगतज्ञानमुत्पादयन्ति, तद् यद्यर्थान्तरं संज्ञाभेदमात्रम् । अव्यतिरेके त्वनुगतज्ञानाभावप्रसङ्गः । तस्मादनुगतस्य वस्तुनः प्रत्यक्षेण प्रतिभासनात् सामान्यनिराकरणे सर्वं दूषणमसाधनमेवेति ।

अथ स्वविषयसर्वगतत्वे गोपिण्डयोरन्तरालेऽपि सामान्यमुपलभ्येत, न चैतत्त[त्?दस्ति] तस्मात् कथं स्वविषयसर्वगतमित्याशङ्क्याह अन्तराले च संयोगसमवायवृत्त्यभावाद् अव्यपदेश्यानीति। संयुक्तसमवायेन गोत्वादिसामान्यस्योपलम्भाद् गोत्वमिति व्यपदेशो न चासाविहास्ति, अतोऽव्यपदेश्यानीति। यदि तथा किमिदमन्तरालं नाम यत्र सामान्यस्योपलम्भप्रसङ्गश्चोद्यते? यदि मूर्त्तद्रव्याभावः? न तत्र गोत्वादिसामान्यम्, अभावत्वादेव। अथ शब्दानुमेयमतीन्द्रियमाकाशम्, अन्तरालावस्थितं वा घटादि द्रव्यम्, तत्रापि न गोत्वादेः समवाये प्रमाणमस्तीत्यनुपलम्भो घटत इत्यलम्।

॥ इति श्रीव्योमशिवाचार्यविरचितायां पदार्थसङ्ग्रहटीकायां सामान्यपदार्थः ॥

## ॥ अथ विशेषपदार्थनिरूपणम् ॥

विनाशारम्भ-
अन्तेषु भवा अन्त्याः, स्वाश्रयविशेषकत्वाद्विशेषाः।
रहितेषु नित्यद्रव्येष्वण्वाकाशकालदिगात्ममनस्सु प्रतिद्रव्यमेकैकशो
वर्तमाना अत्यन्तव्यावृत्तिबुद्धिहेतवः।
यथा अस्मदादीनां गवादिष्वश्वादिभ्यस्तुल्याकृतिगुणक्रियावयव-
संयोगनिमित्ता प्रत्ययव्यावृत्तिर्दृष्टा, गौः शुक्लः शीघ्रगतिः पीनककुद्मान्
महाघण्ट इति। तथा अस्मद्विशिष्टानां योगिनां नित्येषु तुल्याकृतिगुण-
क्रियेषु परमाणुषु मुक्तात्ममनस्सु च अन्यनिमित्तासम्भवाद् येभ्यो
निमित्तेभ्यः प्रत्याधारं विलक्षणोऽयं विलक्षणोऽयमिति प्रत्ययव्यावृत्तिः,
देशकालविप्रकर्षे च परमाणौ स एवायमिति प्रत्यभिज्ञानञ्च भवति,
तेऽन्त्या विशेषाः।
यदि पुनरन्त्यविशेषमन्तरेण योगिनां योगजाद्धर्मात् प्रत्ययव्यावृत्तिः
प्रत्यभिज्ञानञ्च स्यात् ततः किं स्यात्, नैवं भवति। यथा च[।] योगजा-
द्धर्मादशुक्ले शुक्लप्रत्ययः सञ्जायते, अत्यन्तादृष्टे च प्रत्यभिज्ञानम्,
यदि स्यान्मिथ्या भवेत्। तथेहाप्यन्त्यविशेषमन्तरेण योगिनां न योगजा-
द्धर्मात् प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं वा भवितुमर्हति।

**अथान्त्यविशेषेष्विव परमाणुषु कस्मान्न स्वतः प्रत्ययव्यावृत्तिः कल्प्यत इति चेत्, न, तादात्म्यात् । इह अतदात्मकेष्वन्यनिमित्तः प्रत्ययो भवति, यथा घटादिषु प्रदीपात्, न तु प्रदीपे प्रदीपान्तरात् । यथा गवाश्वमांसादीनां स्वत एवाशुचित्वं तद्योगादन्येषाम्, तथेहापि तादात्म्यादन्त्यविशेषेषु स्वत एव प्रत्ययव्यावृत्तिः तद्योगात् परमाण्वादिष्विति ।**

विशेषाणां परीक्षार्थमाह अन्तेषु भवा अन्त्याः स्वाश्रयविशेषकत्वाद् विशेषा इति । उत्पत्तिविनाशयोरन्ते व्यवस्थितत्वाद् अन्तशब्दवाच्यानि नित्यद्रव्याणीति । तथा हि परमाणून् अवधिं कृत्वा द्व्यणुकादिकार्यस्योत्पत्तिः, तथा पृथिव्यादीनामपि तावदुत्पादो यावदाकाशादीति पाठापेक्षया तस्याप्यन्तशब्दवाच्यत्वम् । एवं विनाशान्ते व्यवस्थानं परमाण्वादीनाम् । तथा च तावद् द्रव्यं विनश्यति यावत् परमाणवः, पाठापेक्षया पृथिव्यादीनामप्याकाशादिकं यावद् विनाश इति । तेषु भवाः तद्वृत्तयोऽन्त्या इत्यपदिश्यन्ते । तथा हि भूरित्ययं धातुः सत्ता[यां]वाप्युपलब्धौ, यथेदानीं देवदत्तो गृहे भवत्यास्त इति । सङ्ग्रहोक्तेर्विवरणमाह विनाशारम्भरहितेष्वित्यादि । तत्रान्तपदस्य विवरणं विनाशारम्भरहितेषु नित्यद्रव्येष्वेव, [अण्वा]काशकालदिगात्मनस्स्वात विशेषसंज्ञाया निर्देशः स्पष्टार्थम् । प्रत्ययार्थं व्याचष्टे प्रतिद्रव्यमेकैकशो वर्त्तमाना इति । द्रव्यं द्रव्यं प्रत्येकैको विशेषो वर्त्तते, नैकस्मिन्ननेकः, वैयर्थ्यप्रसङ्गात् । तथा चैकेनैव विशेषेण व्यावृत्तप्रत्ययस्य जनितत्वाद् विशेषान्तरवैयर्थ्यमेव । नाप्येकोऽनेकस्मिन्, सामान्यरूपताप्रसङ्गादिति । द्वितीयपदस्य तु विवरणम् अत्यन्तव्यावृत्तिबुद्धिहेतव इति । नित्यद्रव्येष्वेव वर्त्तन्त एव इत्ययोगान्ययोगव्यवच्छेदेन नित्येषु वर्त्तमानत्वाद् विशेषा इतरस्माद् भिद्यन्त इति । लक्षणं पूर्वमेवोक्तम् ।

अथ विशेषाणां सद्भावे किं प्रमाणम् ? अनुमानम् । तत्र व्याप्तिसमर्थनार्थं दृष्टान्तं निरूपयति । यथा अस्मदादीनां गवादिष्वश्वादिभ्यः प्रत्ययव्यावृत्तिर्दृष्टा तुल्याकृतिगुणादपि सजातीयाद् व्यावृत्ततत्क्रियावयवसंयोगनिमित्ता । तत्र जातिनिमित्ता प्रत्ययव्यावृत्तिः, यस्माद् गौरयम्, अतोऽश्वादिविलक्षण इति । सजातीयत्वेऽपि कृष्णादिगुणसम्बन्धिभ्यः शुक्ल इति

प्रत्ययव्यावृत्तिः । तथा शीघ्रगतिरिति क्रियाविशेषनिमित्ता । तेन हि सता समानगुणादपि सजातीयाद् व्यावर्त्तत इति । पीन इत्यवयवोपचयनिमित्ता, तेन सता समानगुणक्रियादपि समानजातीयाद् व्यावर्त्तते । ककुद्मान् इत्यवयवविशेषनिमित्ता, तेन सता अन्यस्माद् विलक्षणप्रत्ययजननादिति । महाघण्ट इति संयोगनिमित्ता, तत्सद्भावे व्यावृत्तप्रत्ययजननात् ।

तद्दार्ष्टान्तिकव्याख्यार्थमाह अस्मद् विशिष्टानां योगिनां नित्येषु तुल्याकृतिगुणक्रियेषु परमाणुषु मुक्तात्ममनस्सु च प्रत्ययव्यावृत्तिः, एतस्माद् विलक्षणोऽयं विलक्षणोऽयमिति दृष्टा । सा चान्यनिमित्तासम्भवाद् विशेषसम्बन्धादेव भवतीति । तथा च तुल्याकृतिगुणक्रियाधाराः परमाणवः, विशेषसम्बन्धिनः, व्यावृत्तज्ञानविषयत्वात्, गवादिवत् । न च गवादिष्विव जातिगुणक्रियात्मका एव विशेषा भविष्यन्तीति वाच्यम्, समानजातिगुणक्रियाधारत्वेन विशेषितत्वादिति । तथाऽपि सर्वे तैजसाः परमाणवः तेजस्त्वसम्बन्धिनः समानगुणाधाराः समानाक्रियासम्बन्धिनश्च पक्षीकृता इति न तेषु तन्निमित्ता प्रत्ययव्यावृत्तिः । तथा च भास्वरं रूपमुष्णस्पर्शः परिमाणमेकत्वैकपृथक्त्वादयः साधारणत्वान्न व्यावृत्तज्ञानहेतवः । क्रियापि वाताहतानामेकदिगभिमुखतया गमनात् साधारणतया वैलक्षण्यप्रतिपत्तौ न कारणम् । अतो द्रव्यादिस्वरूपस्य विशेषस्यासम्भवाद् यतो निमित्तात् प्रत्ययव्यावृत्तिस्तेऽन्त्या विशेषाः । तथा मुक्तात्मानो मुक्तमनांसि च व्यावृत्तज्ञानविषयत्वाद् विशेषमपेक्षन्ते । शरीरसम्बन्धस्य चात्यन्तं व्यावृत्तेर्न आत्मनि बुद्ध्यादिविशेषो व्यावृत्तज्ञानहेतुः, असम्भवात् । मनसोऽपि शरीरसम्बन्धशून्यस्य संख्यादिगुणानां साधारणत्वाद् विशेषं विना न व्यावृत्तज्ञानोत्पत्तौ कारणमस्तीति । यथोक्तविशेषणाध्यासितेषु व्यावृत्तप्रत्ययः, विशेषकार्यः, व्यावृत्तप्रत्ययत्वाद्, गवादिव्यावृत्तप्रत्ययवत् ।

अथातीन्द्रियत्वात् परमाण्वादेः व्यावृत्तज्ञानविषयत्वे किं प्रमाणम् ? अनुमानमेव । तथाहि परमाण्वादयः, व्यावृत्तज्ञानविषयाः, द्रव्यत्वात्, गवादिवत् । संशयविषयत्वञ्च परमाण्वादेः सत्तासम्बन्धित्वात् स्थाण्वादिवत् । यत्र च संशयस्तत्रावश्यं निर्णय इति । परमाण्वादयः, विशेषसम्बन्धिनः, निर्णयविषयत्वात्, स्थाण्वादिवदेव । अत इदमाह अन्यनिमित्तासम्भवाद् येभ्यो

निमित्तेभ्यः प्रत्याधारं विलक्षणोऽयं विलक्षणोऽयमिति प्रत्ययव्यावृत्तिस्ते अन्त्या विशेषाः। तथा देशकालविप्रकृष्टेऽदृष्टे परमाणौ स एवायमिति प्रत्ययः प्रमाणम्, विशेषसम्बन्धे सति प्रत्यभिज्ञानस्य देवदत्तादावुपलब्धेः। अतो व्यावृत्तप्रत्ययविषयत्वात् प्रत्यभिज्ञायमानत्वाच्च परमाण्वादेर्विशेषसम्बन्धित्वम्। अस्ति च योगिनां पूर्वोपलब्धे परमाणौ स एवायं परमाणुः यः पञ्चपुरावस्थितो वसन्तसमयोपलब्ध इति।

अथ इतरेतराभावात् पृथक्त्वाद् वा प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं वेति, न ततोऽन्यो विशेष इति चेत्, न, तदुपलम्भेऽपि स्थाण्वादौ संशयदर्शनात्। तथाहि इतरेतराभावोपलब्धौ पृथक्त्वोपलम्भे च सति सामान्यदर्शनादिभ्यः किमयं स्थाणुः पुरुषो वेति संशयो दृष्टः, तद्व्यतिरिक्तशिरःपाण्यादिविशेषोपलम्भे च सति पुरुष एवायमिति च निर्णयदर्शनाद् इतरेतराभावपृथक्त्वान्य एव विशेषः परमाण्वादौ वाच्य इति।

अन्ये तु इतरेतराभावस्य निषिध्यमानज्ञानजनकत्वमेव, व्यावृत्तज्ञानञ्च तस्माद् विलक्षणम्, अतो निमित्तान्तरकार्यमिति मन्यन्ते। पृथक्त्ववशाच्च पृथगिति व्यवहारः, न विलक्षण इति।

अथ योगिनां योगजधर्मादेः प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानञ्चेति। तदेवाह यदि पुनः अन्त्यविशेषमन्तरेण योगिनां योगजधर्मात् प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानञ्च स्यात् को दोषः? तदाह एवं नैव भवतीति। यथा चायोगजाद् धर्माद् अशुक्ले शुक्लप्रत्ययः सञ्जायते, अत्यन्तादृष्टपूर्वे च प्रत्यभिज्ञानञ्चेति। यदि कदाचित् स्याद् योगिनामशुक्ले शुक्लप्रत्ययः, प्रत्यभिज्ञानञ्च, मिथ्या भवेत्। तथेहाप्यन्त्यविशेषमन्तरेण योगजधर्मान्न प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं वा भवितुमर्हतीति।

अथ अन्त्यविशेषाणां परमाणूनामिव व्यावृत्तज्ञानविषयत्वाद् विशेषान्तरसम्बन्धे तत्राप्यन्यो विशेषस्तत्राप्यन्य इत्यनवस्था स्यात्। न च व्यावृत्तप्रत्ययविषयत्वे समानेऽपि परमाणूनामेवायं विषयसम्बन्धो न विशेषाणामिति विशेषहेतुरस्तीति। अभ्युपगमे वा, विशेषेषु विशेषान्तरसम्बन्धं विना व्यावृत्तप्रत्ययवत् परमाणुष्वपि स्यादित्याह अथान्त्यविशेषेष्विव

परमाणुषु कस्मान्न स्वतः प्रत्ययव्यावृत्तिः कल्प्यत इति । अस्य प्रतिषेधार्थमाह यदुक्तं परमाणुषु विशेषाभावो विशेषेषु च विशेषान्तरमित्येतन्न, कुत एतत् ? तादात्म्यात्, तत्स्वरूपत्वाद् विशेषाणाम् । ये हि अविशेषस्वरूपास्ते व्यावृत्तज्ञानजन्मनि विशेषमपेक्षन्ते, यथा परमाण्वादयः । न चैवं विशेषास्तदात्मका न भवन्ति, अतस्तादात्म्याद् विशेषाः समानलक्षणं विशेषं नापेक्षन्ते । तथा चेह अतदात्मकेष्वतत्स्वरूपेष्वन्यनिमित्तः प्रत्ययो दृष्टो यथा घटादिषु प्रदीपात् । तथाहि घटादिष्वप्रकाशस्वरूपेष्वन्वयव्यतिरेकाभ्यां प्रदीपाद् विज्ञानं दृष्टम्, न तु प्रदीपे प्रदीपात्, तस्य प्रकाशरूपतया प्रदीपं विनापि प्रकाशनात् । न चैवं घटादिष्वपि प्रकाशं विनैव प्रकाशोऽस्तु, अदर्शनात् । आगमिकमुदाहरणं दर्शयति यथा गवाश्वमांसादीनां स्वत एवाशुचित्वं तद्योगादन्येषां मोदकादीनाम् । न तु श्वमांसस्यापि अशुच्यन्तरसम्बन्धाद् अशुचित्वम्, अदर्शनात् । नापि श्वमांसवत् भक्तादीनामपि स्वत एवाशुचित्वमदर्शनादेव । तथेहापि तादात्म्याद् विशेषस्वरूपत्वाद् अन्त्यविशेषेषु स्वत एव प्रत्ययव्यावृत्तिस्तद्योगात् परमाणुष्वित्युपसंहारः ।

अथ विशेषाणां नित्यत्वमुतानित्यत्वम् ? उत्पत्तिविनाशकारणानुपलब्धेर्नित्यत्वमेव । तथाहि विशेषाणां स्वाश्रयः समवायिकारणम्, असमवाय्यादिकारणञ्च नास्ति इति, विनाशाभ्युपगमेऽपि विशेषाणां पुनर्व्यावृत्तिज्ञानोत्पत्तौ न कारणमस्तीति । अथ विशेषान्तराद्व्यावृत्तज्ञानम्, तन्न, अन्यत्वे प्रमाणाभावादित्यलमतिविस्तरेण ।

॥ इति श्रीव्योमशिवाचार्यविरचितायां पदार्थसङ्ग्रहटीकायां विशेषपदार्थः ॥

॥ अथ समवायपदार्थनिरूपणम् ॥

**अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्ध इह प्रत्ययहेतुः स समवायः । द्रव्यगुणकर्मसामान्यविशेषाणां कार्यकारणभूतानामकार्य-**

कारणभूतानां वा अयुतसिद्धानामाधार्याधारभावेनावस्थितानामिहेदमिति बुद्धिर्यतो भवति, यतश्चासर्वगतानामधिगतान्यत्वानाम् अविष्वग्भावः स समवायाख्यः सम्बन्धः । कथम् ? यथेह कुण्डे दधीतिप्रत्ययः सम्बन्धे सति दृष्टः, तथेह तन्तुषु पटः, इह वीरणेषु कटः, इह द्रव्ये गुणकर्मणी, इह गुणे गुणत्वम्, इह कर्मणि कर्मत्वम्, इह नित्यद्रव्येऽन्त्या विशेषा इति प्रत्ययदर्शनादस्त्येषां सम्बन्ध इति ज्ञायते ।

न चासौ संयोगः सम्बन्धिनामयुतसिद्धत्वाद् अन्यतरकर्मादिनिमित्तासम्भवाद् विभागान्तत्वादर्शनादधिकरणाधिकर्त्तव्ययोरेव भावादिति ।

स च द्रव्यादिभ्यः पदार्थान्तरं भाववल्लक्षणभेदात् । यथा भावस्य द्रव्यत्वादीनां स्वाधारेषु आत्मानुरूपप्रत्ययकर्तृत्वात् स्वाश्रयादिभ्यः परस्परतश्चार्थान्तरभावः तथा समवायस्यापि पञ्चसु पदार्थेष्विहेतिप्रत्ययदर्शनात् तेभ्यः पदार्थान्तरत्वमिति । न च संनोगवन्नानात्वं भाववल्लिङ्गाविशेषाद् विशेषलिङ्गाभावाच्च । तस्माद् भाववत् सर्वत्रैकः समवाय इति ।

ननु यद्येकः समवायः, द्रव्यगुणकर्मणां द्रव्यत्वगुणत्वकर्मत्वादिविशेषणैः सह सम्बन्धैकत्वात् पदार्थसङ्करप्रसङ्ग इति, न, आधाराधेयनियमात् । यद्यप्येकः समवायः सर्वत्र स्वतन्त्रस्तथाप्याधाराधेयनियमोऽस्ति । कथम् ? द्रव्येष्वेव द्रव्यत्वम्, गुणेष्वेव गुणत्वम्, कर्मष्वेव कर्मत्वमित्येवमादि । कस्मात् ? अन्वयव्यतिरेकदर्शनात्, इहेति समवायनिमित्तस्य ज्ञानस्यान्वयदर्शनात् सर्वत्रैकः समवाय इति गम्यते, द्रव्यत्वादिनिमित्तानां व्यतिरेकदर्शनात् प्रतिनियमो ज्ञायते । यथा कुण्डदध्नोः संयोगैकत्वे भवत्याश्रयाश्रयिभावनियमस्तथा द्रव्यत्वादीनामपि समवायैकत्वेऽपि व्यङ्ग्यव्यञ्जकशक्तिभेदादाधाराधेयनियम इति ।

सम्बन्ध्यनित्यत्वेऽपि न संयोगवदनित्यत्वम्, भाववदकारणत्वात् । यथा प्रमाणतः कारणानुपलब्धेर्नित्यो भाव इत्युक्तम् तथा समवायोऽपीति । न ह्यस्य किञ्चित् कारणं प्रमाणत उपलभ्यत इति । कया पुनर्वृत्त्या द्रव्यादिषु समवायो वर्त्तते, न संयोगः सम्भवति, तस्य गुणत्वेन

**द्रव्याजितत्वाद् नापि समवायः, तस्यैकत्वात्, न चान्या वृत्तिरस्तीति ? न, तादात्म्यात् । यथा द्रव्यगुणकर्मणां सदात्मकस्य भावस्य नान्यः सत्तायोगोऽस्ति, एवमविभागिनो वृत्तात्मकस्य समवायस्य नान्या वृत्तिरस्ति, तस्मात् स्वात्मवृत्तिः । अत एवातीन्द्रियः, सत्तादीनामिव प्रत्यक्षेषु वृत्त्यभावात्, स्वात्मगतसंवेदनाभावाच्च । तस्मादिह बुद्ध्यनुमेयः समवाय इति ।**

**योगाचारविभूत्या यस्तोषयित्वा महेश्वरम् ।**
**चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नमः ।।**

**।। इति प्रशस्तपादाचार्यविरचितं द्रव्यादिषट्पदार्थभाष्यं समाप्तम् ।।**

अथ समवायस्य लक्षणपरीक्षार्थमयुतसिद्धानामित्यादिप्रकरणम् । अयुतसिद्धानामेव आधार्याधारभूतानामेव यः सम्बन्धः, स समवाय इति लक्षणं व्याख्यातमेव । अथ केषामयुतसिद्धानामसौ सम्बन्धस्तदाह— द्रव्यगुणकर्मसामान्यविशेषाणाम् । अनियमोपदर्शनार्थं कार्यकारणभूतानान्तु पटादीनाम्, [न?अ] कार्यकारणभूतानाञ्च सामान्यादितद्वतामिति । अयुतसिद्धानामाधार्याधारभूता[वस्थान?ना]मिति चायं नियमः । इहेदमिति बुद्धिर्यतो निमित्ताद् भवति, स समवायाख्यः सम्बन्धः । तथा च सूत्रम् 'इहेदमिति यतः कार्यकारणयोः स समवायः' (वै० सू० ७।२।२६) इति । इह इत्यधिकरणम्, इदमित्याधेयम्, तयोः सम्बन्धं विना 'इहेदम्' बुद्धिर्न भवतीति । यतश्चासर्वगतानामिति नियमाशङ्कानिरासार्थम् । तथा हि सर्वगतानामप्याकाशादीनां स्वगुणादिभिः समवायोपलब्धेः असर्वगतानाम् इति वाक्यं नियमाशङ्कानिरासार्थं व्याख्येयम् । तथा च सर्वगतानामेव समवाय इत्ययं नियमो न घटते, यतश्चासर्वगतानामपि समवायो दृश्यत इति । 'च' शब्दस्य चानुक्तसमुच्चयार्थत्वाद् असर्वगतानां सर्वगतानाञ्चेति लभ्यते । अधिगतान्यत्वानामिति । अधिगतमन्यत्वं नानात्वं येषां ते तथोक्ताः, तेषामिति तादात्म्यव्युदासः । तथाप्यधिगतान्यत्वा

गवाश्वादयो भवन्ति इति अविष्वग्भावेनावस्थितानामिति पदम् । अविष्वग्भावोऽपृथग्भावो देशापृथक्त्वम्, न त्वभेदः, स्वरूपभेदस्योपलब्धेः । तथाहि तन्तवो विभिन्नजातिसम्बन्धिनो विभिन्नस्वरूपाश्च पृथक्त्वे पटोऽप्येवमिति परस्परतोऽन्यत्वमेव, विरुद्धधर्माध्यासात्, प्रतिभासभेदाच्चेति । तथा च रूपादयोऽपि विरुद्धधर्माध्यासाच्च भिद्यन्ते । स च तन्तुपटादीनामस्ति इत्यन्यत्वमेव । सूत्रमप्येवं व्याख्येयम् । कार्यकारणयोरेकत्वपृथक्त्वाभावाद् परस्परं प्रतिभासभेदाद् एकत्वपृथकत्वे न विद्येते । तस्मादधिगतान्यत्वानामविष्वग्भावेनावस्थितानाम् इहेदमिति बुद्धिर्यतः सम्बन्धाद् भवति, स समवायाख्यः सम्बन्धः । कथमित्यव्युत्पन्नप्रश्नः, विपर्यस्ताक्षेपो वा । तथा च न समवायसद्भावे प्रमाणमस्तीति ।

सर्वमेतदसम्बद्धम् । अथेहबुद्धिः प्रमाणम् ? न तस्याः समवायालम्बनत्वमाधारविषयत्वात् । तदुक्तम्—

इहेति चानया बुद्धया समवायो न गृह्यते ।
आधारग्राहिणी चैषा समवायाप्रतिष्ठिता ।। (?)

अथ सम्बन्धनिमित्ता ? स तु तादात्म्यलक्षण एव भविष्यति, समवायपक्षे बाधकोपपत्तेः । तथा हि न अनिष्पन्नयोः समवायो घटते, सम्बध्यभावे सम्बन्धस्यादर्शनात् । अथ निष्पन्नयोः सम्बन्धः समवायः ? तर्हि युतसिद्धिः स्यात् । तथा समवायस्यापि सम्बन्धानभ्युपगमे सर्वतोऽन्यत्वाविशेषाद् अनयोः सम्बन्धिनोः सम्बन्धः, न पदार्थान्तराणामिति प्रतिनियमे हेतुर्नास्तीति । अथवा गृहीतं विशेषणं विशेष्यज्ञानोत्पत्तौ, लिङ्गञ्च लिङ्गिज्ञानोत्पत्तौ व्याप्रियते, समवाये तु तद्रूपता नास्तीति तद्ग्रहणे प्रमाणाभावः । तथा हि इह तन्तुषु पट इति ज्ञानमाधेयानुरक्ताधारं विशेषयन् न समवायानुरक्तमिति स्वात्मगतसंवेदनाभावाद् इह बुद्धौ अप्रत्यक्ष एव समवायः । निर्विकल्पके तु अवयवावयविनोः संश्लेषज्ञाने समवायः प्रत्यक्ष एव, केवलमिहेति बुद्धेः सम्बन्धनिमित्तत्वेनान्यत्रोपलब्धेरिहापि तदुपलम्भादनुमानं प्रवर्त्तते । यत एवं तस्मादिहबुद्धयनुमेयः समवायो न त्विहबुद्धौ प्रत्यक्ष इत्युपसंहारः ।।

ग्रन्थपरिसमाप्तौ च सन्तोषादाचार्यः पुनरपरस्य गुरोर्नमस्कारं करोति—

योगाचारविभूत्या यस्तोषयित्वा महेश्वरम् ।
चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नमः ।। [इति]

इति विरचितमेतद् व्योमनाम्ना शिवेन
प्रतिहतपरपक्षं स्वार्थसिद्धौ समर्थम् ।
कणचरमतवृत्तेर्वर्तनं बाध× × × ×
× × × × × × × × × × × × ×॥

।। इति श्रीव्योमशिवाचार्यविरचिता पदार्थसंग्रहटीका व्योमवती समाप्ता ।।

# प्रथमं परिशिष्टम्

## ग्रन्थेऽस्मिन् प्रसङ्गादुद्धृतानां शास्त्रवचनानां सूत्राणाञ्च वर्णानुक्रमेणोपन्यासः

# द्वितीयं परिशिष्टम्

## ग्रन्थेऽस्मिन् चर्चितानां शास्त्रकाराणां वर्णानुक्रमेण नामानि

# तृतीयं परिशिष्टम्

## ( विशिष्टपदसूची )

# चतुर्थं परिशिष्टम्

## ( विशिष्टवाक्यांशसूची )

# शुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८ | २ | मेर्याकाश° | भेर्याकाश° |
| ८ | ६ | तथा हिं | तथा हि |
| १५ | ५ | एवभिप्रेता | एवाभिप्रेता |
| ९६ | १ | रूण्श्मश्रु° | रूढश्मश्रु° |
| १३१ | १९ | बाहीकस्य | बाह्लीकस्य |
| १६८ | ५ | ( वे० सू० ) | ( वै० सू० ) |
| १७० | २ | नन्मिथ्या° | तन्मिथ्या° |
| १७२ | १४ | शब्दार्धा° | शब्दार्था° |
| १७६ | २६ | गोशादृ° | गोसादृ° |
| १८६ | १३ | काक्य° | वाक्य° |
| १९२ | २७ | सर्वकार्य° | सर्वं कार्यं |
| १९८ | २६ | शास्त्रेतत्र | शास्त्रे तत्र |
| २०२ | ९ | °र्बहिव्यासि° | °र्बहिर्व्याप्ति° |
| २०८ | १४ | वहिर्व्याप्ति° | बहिर्व्याप्ति० |
| २१४ | ३ | अनुपनिवद्धेषु | अनुपनिबद्धेषु |
| २१९ | २० | भावस्त° | भावास्त° |
| २२३ | १३ | द्रव्यत्वम् | द्रवत्वम् |
| २२३ | १४ | इतरस्माद्भिद्यते | इतरस्माद्भिद्यते |
| २३१ | १८ | भूतहित्वमपि | भूतहितत्वमपि |
| २३३ | ११ | ददत्तो | ददतो |
| २४१ | ५ | व्यक्ति धर्म° | व्यक्तिधर्म० |
| २४३ | ८ | इनि मन्यते | इति मन्मते |
| २४३ | २५ | धर्म्यासिद्धश्च | धर्म्यसिद्धश्च |
| २५३ | २ | भ्रमणाविष्वेव | भ्रमणादिष्वेव |
| २५३ | १० | समान्य° | सामान्य° |
| २७९ | ७ | शुल्कः | शुक्लः |
| २९० | ११ | अथेहवुद्धिः | अथेह बुद्धिः |
| २९० | १३ | चानय | चानया |
| २९० | १६ | सम्बध्यभावे | सम्बन्ध्यभावे |
| २९० | २६ | °दिहबुद्धच° | °दिह बुद्धच° |
| २९० | २६ | त्विहबुद्धौ | त्विह बुद्धौ |